श्रीलक्ष्मीनरसिंहो विजयते



# श्रीपूर्णबोधगुरुवंशकथाकल्पतरुः

श्रीदैवज्ञभीमाचार्यकविविरचितः

प्रकाशकः– श्रीमखाशिरामाचार्यः ( शूर्पालयः )

( मूल्यः– सार्धरूप्यकद्वयम् )

श्रीलक्ष्मीनरसिंहो विजयते



# श्रीपूर्णबोधगुरुवंशकथाकल्पतरुः

श्रीदैवज्ञभीमाचार्यकविविरचितः

प्रकाशकः— श्रीमत्स्वामिरामाचार्यः ( शूर्पालयः )

( मूल्य :— सार्धरूप्यकद्वयम् )

श्रीलक्ष्मीनरसिंहो विजयते

# किञ्चित्प्रास्ताविकम्

नरसिंहोऽखिलाज्ञानमतध्वान्तदिवाकरः ॥
जयत्यमितसुज्ञान–सुख–शक्तिपयोनिधिः ॥

स्वाभिमानः स्वकीयाभिमानो वा मनुजन्मनामत्यावश्यक एव सम्मानेन जीवितुम् । तेन विना जीवनं नाम पशूनामिव विरसतामापद्यते। परं सोऽभिमानः दुरभिमानतया परिणतश्चेत् महतीमवहेलनां जनयति जनतायां स्वाश्रयस्य पुंसः । सर्वानुभवसिद्धमिदं नाधिकं विवरणपेक्षते निष्पक्षपातदृशाम् ।

एवं वस्तुस्थित्यां सत्यामपि सत्यापन्हवं विधातुमीहन्ते केचन असदभिनिवेशाः। प्रयतन्ते च वृथा। विपुलमायासमावहन्तोऽपि न प्रभवन्ति स्वाभीष्टसाधने । प्रत्युत विपरीतपरिणामेन मानसीमनुभवन्ति वेदनां दुस्सहां दुस्साहसेन । तद्यथा–

भगवद्भक्ति–भव्यज्ञान––तपःप्रभाव––सर्वमान्यवदान्यतादिविश्व– विख्यातगुणागणगरिम्ण लोकोत्तरमहामहिमैकायतनस्य चतुर्मुख-सर्वज्ञा- चार्य करकमलार्चितश्रीमूलरामादिप्रतिमासन्निधानसमासादितसीमातीत महोत्कर्षस्य श्रीमदाचार्य प्रधानसंस्थानस्य श्रीमदुत्तरादिमठस्य महोच्चां महतीम सहमानाः केचन महाशयाः(?) मनसा तन्महतीं जानाना अपि दुरभि–मानाधीनाः तदपकर्षाय बद्धपरिकराः विविधान् प्रयत्नान् विदधानाः शोचनीयामपहसनीयां दशामनुभवन्ति "मोघाशाः मोघकर्माणः" । नूनं तदुचितमेव ।

सूर्यमण्डलमुद्दिश्य प्रक्षिप्ताः पांसुमुष्टयः ॥
आत्मदृष्टिविनष्टिं ते कुर्वन्तीति न जानते ॥

भगवदनुकम्पासंपादितया निष्कम्पया अपारया विष्णुभक्ति– विज्ञानशक्ति–विरक्तिसंपदा सर्वोच्चतया सर्वमान्ये श्रीमदुत्तरादिमठे "श्रीमूलरामप्रतिमैव नास्ति, तत्पीठाधीशेषु प्रभावशाली न कोऽपि

शककर्ता जातः,तत्पीठं मध्ये कोऽपि तौलववंशीयः समारूढः,,इति निरर्गल प्रलपन्तः श्रीमदुत्तरादिमठस्य महतीमपसारयितुं मुधा प्रयतमानाः दुरभिमानग्रहग्रस्ता व्यत्यस्तविवेकाः विपर्यस्तमस्तिष्का अन्ततो निराशतामापन्ना अपि नैव परित्यजन्ति कुचोद्यं स्वीयम् "स्वभावो दुरतिक्रमः"।

एवं विवदमानामामाक्रन्दनेन केचन मन्दमतयः संदेहास्कन्दिता अमन्दमनानन्दं विन्दमाना दृश्यन्ते तत्र तत्र । तेषां मोहापहत्यै कोऽपि प्रमाणभूतः प्राचीनः ग्रन्थः अपेक्षित आसीत् । येन अक्षिषु धूलिप्रक्षेपकाणां कुचेष्टा विनष्टा भवेयुः ।

एवमालोच्य यथार्थतो वस्तुस्थितिबोधकप्राचीनग्रन्थान्वेषणे प्रवृत्तोऽहं सज्जनसुदैवपरिपाकात् तादृशमपूर्वं ग्रन्थं समासादयम् । यदवलोकनेन सूर्यप्रभायामिव सर्वे विषयाः स्पष्टतया प्रतिभासमाना दूरीकुर्वन्ति दुराग्रहं दुरितमेदुरम् । कान्दिशीकतां भजन्ते संदेहपिशाचिकाः ।

सोऽयमपूर्वो ग्रन्थः "श्रीपूर्णबोधगुरुवंशकथकल्पतरुः" नाम । महीशूरवाचनालययगतग्रन्थप्रतिकृतितया अविश्वासानास्पदीभूतेन प्रमाणभूतेन अनेन ग्रन्थेन कस्मिन् मठे श्रीमूलरामः सीतासमेतो विद्योतते, कस्य वा मठस्य पावनं पीठं महामहिमोपेताः समधिष्ठिताः परिव्राड्वरिष्ठाः, कस्य वा मठस्याधीश्वरेषु समुज्ज्वलः तपःप्रभावः, अदूष्यःवैदुष्यविशेषः सन्न्यासनिकषायमाणा कौपीनपरिशुद्धिः, इतरासाधारणं वैराग्यभाग्यं, महीमण्डलमहनीया महामहिमशालिता इत्यादयः भुवनपावनाः विश्वविश्वविश्रुताः परमश्रेयस्साधनीभूता गणनापथातिगाः गुणमणिगणा विलसन्ति स्म इत्येतदखिलं साधारणसंस्कृतज्ञैरपि स्फुटमेव विज्ञायते ।

किञ्च ग्रन्थे अस्मिन् निरूपितैः सत्यनिष्ठप्रल्हादापरावतारत्वेन प्रथितानाम् अपरोक्षीकृतलक्ष्मीवल्लभानाम्,अपेक्षितप्रदातॄणां,नमतां सत्यधर्म–रतानां भजतां कल्पवृक्षांमतां कामधेनूनां परमपूज्यानां श्रीराघवेन्द्रतीर्थानां स्वयमुत्तरादिमठमागत्य सलेखनिर्देशं विहितयथार्थवचनैरेव स्पष्टमवसीयते श्रीमदुत्तरादिमठ एव श्रीमूलरामावस्थानम्,– इतरमठानां शाखामठत्व–मित्यादिकमखिलम् ।

**नासाद्यते दैवतसन्निधानं विना महत्त्वं महनीयता वा महीतले।** अनया दृष्टया वस्तुतो विचार्यमाणे लोकोत्तरमहामहिम्ना अपारशिष्य-संपदा प्रथितराजाधिराजवितीर्णेन स्वर्ण-मणिखचितपदार्थसार्थेन अल्पेतरग्राम-भूमि-वैभवातिशयेन च श्रीमदुत्तरादिमठ एव ब्रम्हकरार्चित श्रीरामसान्निध्यं स्वतः एव सिद्धम्। तत्साधनाय न प्रमाणान्तरस्यावश्यकता।

"नापेक्ष्यो मुकुरः करस्थबदरीभास्वत्फलालोकने"। तथाऽपि संशयात्मनां शङ्कातङ्कनिरासाय विपर्यस्तचेतसां दुराग्रहनिग्रहाय महात्मनां सत्यप्रियाणां निरवग्रहानुग्रहाय च अपूर्वस्य समीचीनापूर्व-संपादकस्य प्राचीनग्रन्थस्यास्य प्रकाशनमत्यावश्यकमिति मत्वा सत्कार्यभारमुदूढवानहं "संन्तो गुणाढ्याः करुणां क्रियासुः" इति।

ग्रन्थेनानेन इदमपि सिद्ध्यति-अन्ये मठाः एकैकशककर्तृस्वामित्व-भाग्यभाजनतया तन्नाम्नैव प्रथिताः पृथिवीतले। परं श्रीमदुत्तरादिमठो नैकशककर्तृ-प्रभावशालि-देवांशप्रभावन्मुनीश्वराकरतया व्यक्तिनाम्ना गौणीं प्रसिद्धिमलभमानः महोच्चगुणगरिम्णा सर्वमठोत्तरतया श्रीसर्वज्ञाचार्याणामादि-प्रधानसंस्थानतया च "उत्तरादिः" इति सार्थकनाम्ना विजयतेतमामिति दिक्।

विद्वत्प्रमुखसेवारूपमखजसुखाशी शूर्पालयवासी मखाशी रामाचार्यः



॥ श्रीः ॥

# श्रीपूर्णबोधकथाकल्पतरोर्नाम
# दैवज्ञभीमविरचितस्य
# महाकाव्यस्य

| सर्गः | सर्गानुसारिविषयानुक्रमणिका | पृष्ठम् |
|---|---|---|

| सर्गः | सर्गानुसारिविषयानुक्रमणिका | पृष्ठम् |
|---|---|---|
| २१ | श्रीमदभिनवमुनिवर्यप्रभाववर्णनम् । | ८१– ८४ |
| २२ | दिल्लीम्लेच्छराजभयपरिहारकथनम् । | ८४– ८९ |
| २३ | श्रीसत्यविजयतीर्थश्रीसत्यप्रियतीर्थमत्यैक्य–कथावर्णनम् । | ८९– ९५ |
| २४ | श्रीसत्यविजयतीर्थश्रीपादवैकुण्ठयात्रावर्णनम् । | ९५–१०० |
| २५ | कर्णाटके श्रीसत्यबोधतीर्थानां राजभय परिहारकथावर्णनम् । | १००–१०८ |
| २६ | श्रीसत्यबोधतीर्थश्रीपादानां सवणूरपुरनिवास–कथावर्णनम् । | १०८–११४ |
| २७ | श्रीसत्यबोधश्रीपादान्हिकवर्णनम् । | ११४–१२७ |
| २८ | महाभिषेककथावर्णनम् । | १२७–१३७ |
| २९ | श्रीसत्यबोधश्रीपादमहिमोपेतकथावर्णनम् । | १३२–१३७ |
| ३० | सवणपुरे सत्यबोधश्रीपादनिवासकथनम् । | १३७–१३९ |
| ३१ | श्रीसत्यबोधमठं प्रति श्रीवरदेन्द्रागमकथनम् । | १३९–१४३ |
| ३२ | श्रीसत्यबोधश्रीपादैः कृतश्रीनृसिंह–वेङ्कटेश–सीतारामस्थापन–अग्रहारनिर्माणकथा–श्रीपादनिर्याणकथानिरूपणम् । | १३९–१४७ |
| ३३ | श्रीहंसनामकपरमात्मानमारभ्य श्रीमदान–न्दतीर्थादि–श्रीसत्यबोधश्रीपादान्तगुरुवंश–परम्परासंक्षिप्तकथानिरूपणम् । ग्रन्थकारैः अन्ते स्ववंश–स्वकाव्यवर्णनेन काव्योपसंहरणम् । | १४७–१५३ |



## श्रीपूर्णबोधगुरुवंशकथाकल्पतरुः
## प्रथमशाखासर्गः

श्रीपूर्णबोधगुरूभ्यो नमः ।। श्रीरस्तु ।।
प्रणम्य चरणद्वन्द्वं बादरायण–मध्वयोः ।।
जगद्गुर्वन्वयकथां तत्प्रीत्यै कीर्तयाम्यहम् ।। १ ।।
क्वानंन्दतीर्थवंशानुवर्णनं क्व मतिर्मम ।
गोष्पदीकर्तुकामोऽहमज्ञानादस्मि सागरम् ।। २ ।।
मन्दोऽप्यानन्दतीर्थार्यकृपाबलमुपाश्रितः ।।
अगाधमपि संकुच्य वर्णये सर्वमादितः ।। ३ ।।
पूर्वं कोप्राभिधे क्षेत्रे विबुधेन्द्रमुनीश्वरैः ।।
रघुनाथमुनिभ्यौ या प्रोक्ता गुर्वन्वयोद्भवा ।। ४ ।।
कथा सा लेखयित्वा तैर्बध्वा दर्शनपुस्तके ।।
स्थापिता तदुपर्यन्या लिखिता सा मठे स्थिता ।। ५ ।।
तां सत्यबोधश्रीपादानुज्ञयाऽऽनीय सर्वशः ।।
विलोक्याहं ग्रन्थरूपां कुर्वेऽपूर्वां सतां मुदे ।। ६ ।।
हंसरूपी हरिः पूर्वं लोकोद्धरणंहेतुना ।।
वर्णाश्रमोचितान्धर्मानुपदिश्याब्जसंभुवे ।। ७ ।।
विशेषतस्तु तत्रापि धर्मांस्तुर्याश्रमोचितान् ।।
ब्रह्माणं बोधयामास तत्र मुख्याधिकारिणम् ।। ८ ।।
ब्रह्मा संन्यासिनश्चक्रे सनकादीनथ स्वयम् ।।
दुर्वाससे ददुस्तै स संचरन् भुवमाययौ ।। ९ ।।
खगवाहनतीर्थेभ्यो दत्वा संन्यासमादरात् ।।
भगवद्वाचकान्यस्मै शास्त्राण्यप्युपदिश्य च ।। १० ।।
प्रस्थाने स्वार्पितं पांडुपुत्रैस्तद्देवतार्चनम् ।।
दत्वा जगद्गुरूं चक्रे मानुषे धर्मवृद्धये ।। ११ ।।
वीशवाहस्तु कैवल्यनाथायाथाश्रमं ददौ ।।
कैवल्यनाथःस्सन्न्यासं ज्ञानेशाय ददौ ततः ।। १२ ।।

ज्ञानेशतीर्थे दैवात्तु परलोकं गते सति ॥
तच्छिष्य एव सन्न्यासी भूत्वा वृन्दावनांन्तिके ॥ १३ ॥
परतीर्थाभिधो भूत्वाऽ कस्माद्दुर्वाससा तदा ॥
उपदिष्टस्तेन केचित्तमेवाद्यं जगुर्भुवि ॥ १४ ॥
परगुणपरतीर्थः प्राप्य सन्न्यासमस्मा-
त्स्वयमपिवरसत्यप्रज्ञतीर्थं चकार ॥
तदनु विधिवदार्यः प्राज्ञतीर्थोऽपि भूत्वा
स्वकरजमपि चक्रेऽथाच्युतप्रेक्षमांशु ॥ १५ ॥
ततोऽच्युतप्रेक्षनामा सत्यतीर्थं करोद्भवम् ॥
कृत्वा तेनैव सहितश्चचार धरणीतले ॥ १६ ॥
तदाऽच्युतप्रेक्षसुनामधेये सन्न्यासधर्माचरणातिसक्ते ॥
मही च दुर्मार्गतमःप्रदुष्टा विज्ञानसूर्योऽस्तमवाप दैवात् ॥ १७ ॥
इत्थं जनेऽनुचितकर्मरतेऽतिखिन्न-
चित्तैरजादिविबुधैरभिवन्दितोऽजः ॥
आज्ञां ददौ स पवनाय भुवं व्रजेति ॥
सोऽङ्गीचकार गुरुभक्तिविरक्तियुक्तः ॥ १८ ॥
आसीत्तदैव गुणवान् भुवि मध्यगेह-
नामा स भुसुरवरस्सुतलब्धिकामः ।
संसेवितुं रजतपीठपुराधिवासं
भक्त्या भुजङ्गशयनं प्रययौ सभार्यः ॥ १९ ॥
तीव्रैः पयोव्रतमुखैर्द्विषडब्दकालं ।
संसेवितस्स भगवानथ दम्पतिभ्याम् ॥
तुष्टोऽभवत्स करुणापयसांनिधिस्सा ।
कान्तादृतौ समुचितेऽथ बभार गर्भम् ॥ २० ॥
काले गते नव-कु-बाहु-समुद्र ४२१९ तुल्य ।
वर्षे मिते कलियुगागमनाच्च तत्र ॥
श्रीशालिवाहनृपभुक्तख-वेद-शून्य- ।
चन्द्रै १०४० मिताब्दनिचयैरजनीशमानात् ॥ २१ ॥

रेवानदीयमदिशीह विलम्बिवर्षे ।
मासे त्विषेऽथ विजयाभिद्यसद्दशम्याम् ।
क्षेत्रे सुपाजक इति प्रथितेऽतिपुण्ये ।
सा भुसुरेन्द्रवनिता सुषुवे कुमारम् ॥ २२ ॥
अंशेन वायुरवतीर्य स रूप्यपीठे ।
विष्णुं प्रणम्य भवनं प्रययौ तदीयम् ॥
तं पूर्वपक्षसितबिम्बमिव प्रवृद्धं ।
यावाद्द्विजेन्द्रवनिता सुषुवेऽत्र तावत् ॥ २३ ॥
संपूर्णलक्षणचणं नवराजमान-
द्वारान्तरं परमसुन्दरमन्दिरं तत् ॥
राजेव सत्पुरवरं भुवनाधिराजो
निष्कासयन् बहिरसौ भगवान्विवेश ॥ २४ ॥
संतुष्यतां सकलसन्निकरैरसद्भिः ।
खिद्येत वायुरयमाविरभूत्पृथिव्याम् ॥
आख्यन्निती व सुरदुन्दुभिमन्द्रनादः
प्राश्रावि कौतुकवशैरिह मानवैश्च ॥ २५ ॥
स जातकर्मादिकमस्य कृत्वा ।
तं वासुदेवं प्रचकार नाम्ना ॥
बाल्ये स नानाऽद्भुतकर्म कृत्वा ।
भूत्वा व्रती भिक्षुवरत्वमैच्छत् ॥ २६ ॥
श्रुत्वाऽथ तं तथा लोकैस्सन्न्यासे कृतनिश्चयम् ।
ऊचतुः पितरौ पुत्रमावां कः पालयेदिति ॥ २७ ॥
अथ दृष्ट्वा स तावार्तौ सान्त्वपूर्वमुवाच ह ॥
मां विनाऽन्योऽपि युवयोर्भविष्वति सुतस्सुधीः ॥ २८ ॥
यावत्तस्य भवेज्जन्म तावद्युष्मत्सप्तीपगः ॥
भविष्यामि न संदेहः पश्चाद्गन्ता भवाम्यहम् ॥ २९ ॥
इत्थं पुत्रवचश्श्रुत्वा संतुष्टौ पितरावुभौ ॥
कालान्तरे परः पुत्रोऽभवत्पूर्वोक्तवत्तयोः ॥ ३० ॥

ततस्स वासुदेवस्तौ हित्वैकादशवार्षिकः ॥
सन्न्यासार्थं गुरुं प्रापाथाच्युतप्रेक्षनामकम् ॥ ३१ ॥
ततोऽच्युतप्रेक्षनाम्नोऽनुग्रहार्थमनन्तधीः ॥
सौम्याख्यवर्षे सन्न्यासं जग्राह विधिपूर्वकम् ॥ ३२ ॥
तदाऽच्युतप्रेक्षनामा दत्वा सन्न्यासमादरात् ॥
पूर्णबोधोऽयमित्येवं नाम तस्मै ददौ मुदा ॥ ३३ ॥
पूर्णप्रज्ञो ज्ञानदाता मध्वो ध्वस्तदुरागमः ॥
तत्वज्ञो वैष्णवाचार्यो व्यासशिष्यो यतीश्वरः ॥ ३४ ॥
आनन्दतीर्थसन्नामा जितवादी जितेन्द्रियः ॥
एवं द्वादश नामानि तस्योक्तानि मनीषिभिः ॥ ३५ ॥
शास्त्राण्यध्येतुमारेभे संशयेऽथ समागते ॥
गुरोरप्यच्छिनद्बुध्या स्वयं न्यायेन संशयम् ॥ ३६ ॥
सोंऽङ्गीचकार बहुधा तद्युक्तिं शास्त्रसम्मताम् ॥
निमित्तमात्रमभवत्सुखतीर्थमुनेर्गुरुः ॥ ३७ ॥
ततोऽच्युतप्रेक्षनामा सत्यतीर्थं पुरातनम् ॥
समाश्वास्य ददौ पाण्डुपुत्राणां देवतार्चनम् ॥ ३८ ॥
सत्यतीर्थस्ततो मध्वसम्मत्या तदनुज्ञया ॥
मठाधिकारी ह्यभवद्भीमवेद्याख्यसुस्थले ॥ ३९ ॥
इत्थं श्रीसत्यतीर्थस्तदनुगुरुवरैरच्युतप्रेक्षसंज्ञै
राप्तां श्रीपाण्डवानां स्वगुरुमठगतां देवतार्चामवाप ॥
तेषामाज्ञां गृहीत्वा मठमपि च निजं भीमवे द्या ख्यपुर्यां ॥
कृत्वा तस्मिन्नुवास प्रतिदिवसमलं पूजयन् राममूर्तिम् ॥ ४० ॥

**इति श्रीवेणुपल्लीश्रीनिवासाचार्यात्मजवेङ्कटाचार्यपादाराधक कृष्णाचार्यान्तेवासिदैवज्ञभीमविरचिते पूर्णबोधगुरुवंशकथाकल्पतरौ मध्वावतारकथनं नाम प्रथमशाखासर्गः ।**

---

## श्रीमदानन्दतीर्थभगवत्पादेभ्यो नमः

## द्वितीयशाखासर्गः

आनन्देब्देऽऽभिषिक्तोऽभूत्साम्राज्येऽक्षतृतीयके ॥
गुरुणा सद्गुरुः पूर्णप्रज्ञस्स्थापयितुं मतम् ॥ १ ॥
आनन्दतीर्थप्रख्यातिं श्रुत्वा मायिवरास्तदा ॥
समेत्य बहुधा वादं कृत्वा जग्मुः पराजिताः ॥ २ ॥
गीताभाष्यं ततः कृत्वा महाबदरिकाश्रमम् ॥
गत्वा व्यासं प्रणम्याथ पुस्तकं तत्समर्प्य च ॥ ३ ॥
व्यज्ञापयद्भवपादसरोजयुगलंभजन् ॥
वसाम्यत्रैव भगवन् समीपे भवतस्त्विति ॥ ४ ॥
तमुवाच ततो व्यासस्त्ववतारप्रयोजनम् ॥
कृत्वा धर्मान् भुवि स्थाप्य पुनरेहि ममांन्तिकम् ॥ ५ ॥
एवमुक्त्वाऽथ तद्भाष्यपुस्तकं स विलोक्य च ॥
प्रत्यर्प्याज्ञापयत्सूत्रभाष्यादीनपि कुर्विति ॥ ६ ॥
तस्यानुज्ञां गृहीत्वाऽणुबदरीं समुपेत्य सः ॥
सूत्रभाष्यं तत्र कृत्वा गोदातीरमथाययौ ॥ ७ ॥
तत्र शोभनभट्टाख्यशास्त्रिणं चोपदिश्य तत् ॥
आजगाम ततस्तस्माद्रौप्यपीठपुरं प्रति ॥ ८ ॥
अथानंन्तेश्वरं नित्यं पूजयन् गुरुशेखरः
रौप्यपीठपुरे वासं चक्रे मध्वो महायशाः ॥ ९ ॥
अथैकदाऽऽनंन्दतीर्थः पश्चिमाब्धेस्तटे शुभे ॥
स्नानं कृत्वा विधानेन जपं कर्तुमुपस्थितः ॥ १० ॥
तत्रैका संस्थिता नौका समुद्रे दैवयोगतः ॥
तत्रत्यैस्तु कृते यत्ने तस्मान्नैव चचाल सा ॥ ११ ॥
तत्रत्यार्तध्वनिं श्रुत्वा पूर्णप्रज्ञो विलोक्य ताम् ॥
वस्त्रेणाकर्षणं चक्रे नौकाऽऽप्यारात्समागता ॥ १२ ॥
तं दृष्ट्वा विस्मयान्नौकाधिपपूर्वास्तु हर्षिताः ॥
समागत्याऽऽनंदतीर्थं प्रार्थयामासुरान्दरात् ॥ १३ ॥

भवताऽऽगमिता नौका कृतयत्नामितैः परैः ॥
असाध्या निर्गताऽम्भोधेरपीयं तीरमागता ॥ १४ ॥
वयं च जीवितास्सर्वे ग्राहग्रासत्वमागताः ॥
अनाथेष्वभवद्युष्मद्दयाऽस्मासु यदृच्छया ॥ १५ ॥
अस्मदीयपदार्थेषु भवद्भिर्यदपेक्ष्यते ॥
तद्दास्यामो वयं सर्वे भवद्भ्यः प्रीतिपूर्वकम् ॥ १६ ॥
इत्थं समर्थिता नौस्थैः कृष्णं नौकासमागतम् ॥
गोपीचंन्दनमध्यस्थं ज्ञात्वैवेदं बभाषिरे ॥ १७ ॥
नाऽपेक्षाऽस्माकमर्थेषु गोपीचन्दनमृत्त्रयम् ॥
देयं स्थुलं च मृद्राशेर्नान्यदिच्छामहे वयम् ॥
इत्थं तैरर्थितास्तेऽथ गोपीचन्दनराशितः ॥
ददुरानीय यत्नेन संयुक्ता बहवस्त्रयम् ॥ १८ ॥
जपं समाप्य मृत्पिण्डान् गृहीत्वा करमस्तकैः ॥
द्वादशस्तोत्रसुश्लोकैस्स्तुवन् स श्रीपतिं ययौ ॥ १९ ॥
एकस्मिन् पतिते तत्र बलभद्रोऽभवत्स्वयम् ॥
अपराद्रौप्यपीठे तु कृष्णो व्यक्तोऽभवत्ततः ॥ २० ॥
प्रक्षालिते तु मृत्पिण्डे तदा मध्वसरोवरे ॥
व्यक्तोऽभवत्सुन्दराङ्गः कृष्णो भक्तार्तिनाशनः ॥ २१ ॥
ततो मध्वसरः पश्चात्कृष्णं संस्थाप्य तं तदा ॥
मध्वः कृष्णस्य पूजार्थं पूजकानप्यकल्पयत् ॥ २२ ॥
अष्टसंख्याकतुलववटूनानीय सत्वरम् ॥
दत्वा तुर्याश्रमं तेभ्यो ददौ नामान्यसौ पृथक् ॥ २३ ॥
तत्राद्योऽभूध्दृषीकेशतीर्थः पश्चान्नृसिंहकः ॥
जनार्दनस्तथोपेन्द्रो वामनः पंचमस्स्मृतः ॥ २४ ॥
विष्णुतीर्थोऽभवत्षष्ठो रामतीर्थस्तु सप्तमः ॥
अधोक्षजाख्यतीर्थोऽभूदष्टमः कृष्णपूजकः ॥ २५ ॥
युग्मयुग्माब्दपर्यन्तमेकैकः पूजकोऽभवत् ॥
तेषां नित्यं पूजनार्थं स ददौ प्रतिमाष्टकम् ॥ २६ ॥

रामं कालीयमथनं गोपालं विठ्ठलद्वयम् ।।
भूवराहं नृसिंहं च विठ्ठलं स ददौ क्रमात् ।। २७ ।।
तेषां स्थित्यै मठान्यष्ठौ कारयित्वा पृथक् पृथक् ।।
संस्थाप्य तेषु तान् सर्वान् कृत्वा तेषां च साधनम् ।। २९ ।।
कृष्णपूजानुकूल्यार्थं पदार्थान् परिकल्प्य च ।।
तेषां पूजापदार्थानां स चक्रे लेखकावुभौ ।। ३० ।।
ततस्तृतीयखण्डं तद्गोपीचन्दनसंभवम् ।।
प्रक्षाल्य तद्गतं श्रीमज्जनार्दनमनल्पधीः ।। ३१ ।।
नौकाधिपार्थितस्तत्र यरमालेऽतिशोभने ।।
स्थापयामास तद्भक्त्या तुष्टोऽथ प्रीतिपूर्वकम् ३२ ।।
ततौ जगाम गुरूराट् पुनर्बदरिकाश्रमम् ।।
वेदव्यासं नमस्कृत्य सूत्रभाष्यं समार्पयत् ।। ३३ ।।
तद्भाष्यपुस्तकं बीक्ष्य तात्पर्यं भारतस्य सः ।।
कुर्वित्याज्ञाप्य चानुज्ञां गंन्तुं पूर्णमतेर्ददौ ।।३४ ।।
यदा गंन्तुं समुत्तस्थौ तदासौ बादरायण : ।।
मुष्टिना सिकतागोलाष्टकं चिक्षेप चाम्बरे ।। ३४ ।।
तद्धस्तस्पर्शमात्रेंण सर्वं शुद्धं शिलामयम् ।।
बभूव भगवांस्तेषु स्वयं सन्निहितो ऽ भवत् ।। ३६ ।।
व्यासाष्टकं तदभवत्त्रिविधं वर्णभेदत : ।।
तन्मध्ये मधुवर्णं च वेदव्यासचतुष्टयम् ।। ३७ ।।
श्वेतनीलसमेतं च वेदव्यासत्रयं स्मृतम् ।।
रक्तवर्णं ततस्त्वेकमेवं व्यासाष्टकं स्मृतंम् ।। ३८ ।।
श्वेतनीलेषु स्थूलौ द्वौ मिश्रवणौ तु वर्तुलौ
तयोर्मध्येऽधिकसितस्त्वेकः कृष्णाधिकोऽपरः ।। ३९ ।।
श्वेतनीलस्तयोरन्यस्तृतीयो दीर्घचिप्पटः ।।
स एवाधश्श्वेतवर्णः कृष्णवर्णस्तथोपरि ।। ४० ।।
व्यासांङगुष्टाङ्कितश्चोर्ध्वं शेषास्सूक्ष्माः क्रमात्स्मृताः ।।
एते व्यासेन मध्वाय दत्ताः पूजयितुं सदा ।। ४१ ।।

एवं व्यासाष्टकं दत्वा लोकानां हितकाम्यया ॥
वासिष्ठकृष्णस्संतुष्टोऽनुज्ञां मध्वमुनेर्ददौ ॥ ४२ ॥
आज्ञां गृहीत्वा तस्यासौ हित्वा बदरिकाश्रमम् ॥
आगत्य चाणुबदरीं नरनारायणाश्रमम् ॥ ४३ ॥
तं नत्वा दर्शयामास तस्मै व्यासाष्टकं मुदा ॥
स दृष्ट्वा सिकताव्यासाष्टकं मध्वमुवाच ह ॥ ४४ ॥
एतेष्वष्ठस्वपि सदा लक्ष्म्या सह वसाम्यहम् ॥
एवमुक्त्वा पुनस्तस्मै ददौ व्यासाष्टकं मुदा ॥ ४५ ॥
ततस्तेनाभ्यनुज्ञातः पूर्णप्रज्ञः प्रणम्य तम् ॥
रौप्यपीठपुरेऽनंन्तेश्वरं द्रष्टुं पुनर्ययौ ॥ ४६ ॥
अथानन्तेश्वरं व्यासाष्टकं नित्यं प्रपूजयन् ॥
उवास तत्र कतिचित्कालं मध्वो महामुनिः ॥ ४७ ॥
ततो मध्वमुनिर्व्यासत्रयं जग्राह सोऽष्टकात् ॥
श्वेतनीलत्रयादेकं मधुवर्णं चतुष्टयात् ॥ ४८ ॥
एकं तथा रक्तवर्णमेवं व्यासत्रयं तदा ॥
गृहीत्वा मध्ववाटेऽथ मधुवर्णं निधाय च ॥ ४९ ॥
सुब्रम्हण्यं ततौ गत्वा श्वेक्तवर्णं च संपुटे ॥
आस्थापयद्बहिःश्वेताधिकं रक्तं नखाङ्किकतम् ॥ ५० ॥
पिधाय स्थापयामास श्वेताधिक्यं तथा बहिः ॥
वेदव्यासनखेनासौ रक्तवर्णेन चिन्हितः ॥ ५१ ॥
अद्यापि दृश्यते लोकैस्सिकताबादरायणः ॥
ततो मध्वमुनिर्मध्यतालामठगतं विभुम् ॥ ५२ ॥
निरंन्तरं पूजनार्थं स्वयं पूर्वाश्रमानुजम् ॥
यतिं कृत्वोपदिश्याथ प्रणवं तं प्रति स्वयम् ॥ ५३ ॥
नाम्ना कृत्वा विष्णुतीर्थं तत्र संस्थापयन्मठे ॥
सुब्रम्हण्ये तदीयं च कृत्वा सन्न्यासिनं परम् ॥ ५४ ॥
स्थापयामास पूजार्थं स्वयं सर्वत्र पूजयन् ॥
रौप्यपीठपुरे प्रातः कृष्णपूजां विधाय सः ॥ ५५ ॥

अपूजयच्च मध्यान्हे मध्यवाटगतं विभुम् ॥
सुब्रम्हण्ये तु सायान्हे व्यासौ च सिकतामयौ ॥ ५६ ॥
पूजयित्वाऽवसत्तत्र पुनः प्रातर्विलोमतः ॥
एवं रजतपीठादिपुरादौ स निरन्तरम् ॥ ५५ ॥
संचरन् पूजयन् कृष्णं वेदव्यासं स्थितोऽभवत् ॥
इत्थं श्री गुरूपूर्णबोधमुनये व्यासाष्टकं यन्मुदा ॥
दत्तं सत्यवतीसुतेन सिकतारूपं सदिष्टप्रदम् ॥
तेषां दर्शनमात्रतोऽघनिचयध्वंसो भवेत्स्वर्धुनी– ॥
मुख्याशेषसुतीर्थमज्जनफलावाप्तिश्च सम्यङ्नृणाम् ॥ ५६ ॥
**इति श्री (वेणु) पल्लीवे० श्रीकृष्णव्यासाष्टकागमनक्रमकथाकथनं नाम द्वितीयः शाखासर्गः ॥**

---

## श्रीपूर्णप्रज्ञगुरुभ्यो नमः

## तृतीयः शाखासर्गः

पूर्णप्रज्ञस्ततो रामप्रतिमामतिसुंन्दराम् ॥
शिल्पिभिः कारयामास संस्थानं कर्तुमादरात् ॥ १ ॥
सर्वतो भद्रपीठस्थां तां पित्तलमयीं शुभाम् ॥
भिक्षुकाणां किरीटाभकिरीटां विजयप्रदाम् ॥ २ ॥
प्रतिष्ठाप्याऽथ संस्थाप्य पीठस्थितवरासने ॥
पीठे तृतीयकक्षायामूर्ध्वभागेऽतिशोभने ॥ ३ ॥
दक्षिणावर्तशङ्खं चाक्षय्याख्यं सुपात्रकम् ॥
स्थापयामास तन्मध्यकक्ष्यायां रघुपादधः ॥ ४ ॥
ततो वासिष्ठतद्व्यासजपञ्चकं वालुकात्मकम् ॥
बृहत्संपुटमध्ये तत्स्थापयामास भक्तितः ॥ ५ ॥
मठस्थपञ्चव्यासेषु श्वेतनीलावुभौ स्मृतौ ॥
तत्र नीलाधिकश्चादौ स्थाप्यते चिप्पटाकृतिः ॥ ६ ॥
मधुवर्णेषु त्रिष्वेको रघुनाथकरच्युतः
तुंङगभद्रानदीतोये गतस्तेषां तपोबलात् ॥ ७ ॥

स एव तैरर्थितस्सन् दिनेऽथ पुनरष्टमे ॥
श्वेताधिकोऽनेकवर्णः कूर्मरूपस्समागतः ॥ ८ ॥
श्रीपादैस्स्थाप्यते पीठे दक्षिणे तु चतुर्थकः ॥
द्वितीयश्च तृतीयश्च मधुवर्णाविभावपि ॥ ९ ॥
स्थाप्येते श्वेतनीलाग्रे क्रमान्मध्ये गुरूत्तमैः ॥
एतादृशं मठस्थं तद्वालुकाव्यासपञ्चकम् ॥ १० ॥
लक्ष्मीनारायणाख्यं च दधिवामनसंज्ञकम् ॥
हयास्यं श्रीधरं चैव सालग्रामचतुष्टयम् ॥ ११ ॥
सुदर्शनत्रयं चैवोभयवक्त्रसुदर्शनौ ॥
चक्राङ्किकर्तशिलाः पञ्च चैवं त्वेकोनविंशतिम् ॥ १२ ॥
स्थापयित्वा संपुटे तत्सर्वमेकत्रतस्ततः ॥
तत्पीठस्याद्यकक्षायां स्थापयामास पूर्णधीः ॥ १३ ॥
एवं संस्थाप्य रघुपं पूजयंश्च दिने दिने ॥
सर्वदिक्संस्थदुर्वादिजयं चक्रे महीतले ॥ १४ ॥
यं पूजयन् दिग्विजयं चक्रे मध्वो महामुनिः ॥
तं दिग्विजयनामानं राममाह सभातले ॥ १५ ॥
ग्रन्थांश्चक्रेऽथ दुर्वादिवरगर्वापहारकान् ॥
मुमुक्षूणां मोक्षमार्गप्रदर्शनमहापटून् ॥ १६ ॥
विष्णोस्तथैव जीवानां जडानां च परस्परम् ॥
पञ्चभेदान्नित्यतया सर्वावस्थासु सर्वशः ॥ १० ॥
विष्णोस्सर्वोत्तमत्वं चाक्षरत्वं गुणपूर्णताम् ॥
जीवानां तारतम्यं च सर्वदाप्यस्वतन्त्रताम् ॥ १८ ॥
अनादिकर्मबद्धत्वं नित्यतामप्यपूर्णताम् ॥
अनित्यत्वं च जगतस्सत्यत्वं परतन्त्रताम् ॥ १९ ॥
इत्याद्यनेकसद्युक्तियुक्तैश्च श्रुतिसम्मतैः ॥
पुराणवाक्यसम्मिश्रैः कुवादिमतखण्डकैः ॥ २० ॥
सप्तत्रिंशन्मितैर्ग्रन्थैस्स्थापयन् स्वकृतैर्मतम् ॥
ददौ तुर्याश्रमं तुष्टश्चतुर्भ्यस्संसृतिच्छिदे ॥ २१ ॥

तत्राद्यः पद्मनाभाख्यो द्वितीयो नृहरिस्स्मृतः ॥
तृतीयो माधवोऽक्षोभ्यतीर्थोऽन्तिम इतीरितः ॥ २२ ॥
चत्वारोऽद्वैतशास्त्रे ते समर्थाश्शास्त्रिणः पुरा ॥
सुयोग्या अप्ययोग्यानां संगाद्दुश्शास्त्रिणोऽभवन् ॥ २३ ॥
स तु शोभनभट्टाख्यस्त्वौत्तरोऽथ मठं प्रति ॥
समागत्यानन्दतीर्थैस्सन्न्यासमलभत्तदा ॥ २४ ॥
प्रणवं चोपदिश्याऽथ तस्मै मध्वाभिधो मुनिः ॥
पद्मनाभाख्यतीर्थोऽयमिति नाम चकार ह ॥ २५ ॥
तदैव च यजुर्वेदी रामशास्त्री समेत्य तम् ॥
ममापि देहि सन्न्यासमिति मध्वमुवाच ह ॥ २६ ॥
तमाहानंन्दतीर्थस्तु मा सन्न्यासे मनः कुरु ॥
राज्याधिपत्यं भवति सुखप्रारब्धमस्ति ते ॥ २७ ॥
इत्युक्तस्सुखतीर्थेन रामशास्त्री तमूचिवान् ॥
तेनैवान्तःप्रेरितस्सन् देहीत्येवं पुनः पुनः ॥ २८ ॥
सुखतीर्थमुनिस्तस्मै दत्वा तुर्याश्रमं ततः ॥
ददौ नृहरितीर्थोयमिति नाम मुदाऽन्वितः ॥ २९ ॥
ततस्तमूचे नृहरितीर्थ प्रीतिपुरस्सरम् ॥
इतः परं गजाधीशराज्यप्राप्तिर्भवेत्तव ॥ ३० ॥
तत्र द्रव्यालये द्रव्यादधः पुरुषयुग्मतः ॥
मंञ्जूषा वर्तते तस्यां सीतारामौऽस्त्यजार्चितः ॥ ३१ ॥
प्रतिमा मूलरामस्य पंञ्च लोहमयी किल ॥
ताम्राधिक्यात्तन्मयीं तां वसिष्ठो मुनिरब्रवीत् ॥ ३२ ॥
विश्वकर्मकृता साऽतिसुन्दरावयवान्विता ॥
विचित्रसत्किरीटादिसहजाभरणैर्युता ॥ ३३ ॥
कंङकणत्रयसंयुक्तहस्तमूला मनोहराः ॥॥
वामजङ्घालसद्वीरकङ्कणामितलक्षणा ॥ ३४ ॥
भाति यस्याःस्सव्यपादे ब्रम्हनिर्मितनुपुरः ॥
माणिक्येतस्स्वर्णमयो निर्मुखो भ्रमति स्फुटम् ॥ ३५ ॥

राजीवकीर्णकाकारपीठमध्ये सुसंस्थिता ॥
रामस्यैतादृशी मूर्तिरिदानीं तत्र वर्तते ॥ ३६ ॥
तथैव सीताप्रतिमा वर्तते पित्तलात्मिका ॥
पश्चाद्भागस्थकवरा वृत्तताम्रसुपीठगा ॥ ३७ ॥
माङ्गल्यसूत्रविलसद्ग्रीवयाऽतिविराजिता ॥
स्तनपट्टिकया वस्त्रालंङ्कारार्द्यैविराजिता ॥ ३८ ॥
हस्ताभ्यां दक्षसव्याभ्यां सुधाकलशमम्बुजम् ॥
बिंभ्रती नाभितो वामपक्षस्थतिलराजिता ॥ ३९ ॥
उच्चत्वे स्वपतेर्नाभिमण्डलाच्च यवाधिका ॥
एवंविधास्ति तत्रैको रामनिष्कः पुरातनः ॥ ४० ॥
मार्कण्डेयपुराणे तूत्तरकाण्डे तथैव च ॥
अध्याये षण्णवतिके ग्रंन्थे पुष्करसंज्ञके ॥ ४१ ॥
रामायणे तु वासिष्ठे जानकीमूलरामयोः ॥
महिमा त्वानुपूर्वेण वर्णितोऽस्ति मयोदितः ॥ ४२ ॥
लक्षणान्यपि तत्रैव प्रोक्तान्येताति सर्वशः ॥
राघवप्रतिमायाश्च सीतामूर्तेस्तथैव च ॥ ४३ ॥
इमे तु प्रतिमे पूर्वं निर्मिते विश्वकर्मणा ॥
ब्रम्हणा पूजिते तेन दत्ते रुद्राय चार्थिने ॥ ४४ ॥
प्रददौ स सतीदेव्यै सती दक्षाध्वरे स्वयम् ॥
स्वदेहत्यागसमये ददौ सा मुनये तदा ॥ ४५ ॥
चतुर्मुखाय देहीति स ददौ ब्रम्हणे ततः ॥
स मेरौ रत्नखचितमण्डपे स्थाप्य सुंन्दरे ॥ ४६ ॥
अपूजयत्तमिक्ष्वाकुस्तपसाऽतोषयच्चिरम् ॥
तस्मै तुष्टो ददो ब्रम्हा सीतारामं रघूत्तमम् ॥ ४७ ॥
ततस्तद्वंशजास्सर्वे पूजयामासुरन्वहम् ॥
तस्मिन् दशरथो जातः ऽपूजयामास भक्तितः ॥ ४८ ॥
अपुत्रः पुत्रकामस्संस्तमेव प्रार्थयत्सदा ॥
कृत्वा स पुत्रकामेष्टिमलभत्तत्प्रसादतः ॥ ४९ ॥

पुत्रान् गुणाढ्यांश्चतुरस्तत्र ज्येष्ठस्य भूपति : ।।
रामेतिनामकरणं चक्रे तस्यैव नामत : ।। ५० ।।
राज्ञो भक्त्या रामदेवस्तुष्टस्तत्पुत्रतां गतः ।।
मोहयन्मायया भूपं तेषु ज्येष्ठत्वमागतः ।। ५१ ।।
रामस्सीतामथोद्वाह्य वने वासं चकार सः ।।
रावणागमनं ज्ञात्वा सा कैलासं गताऽभवत् ।। ५२ ।।
हृत्वा दशमुखस्सीताकृतिं लंङ्कापुरीं ययौ ।।
संग्रामे रावणं हत्वा सोऽग्निकुंण्डादवाप ताम् ।।
पुष्पकेण विमानेन गत्वाऽयोध्यापुरीं पुनः ।। ५३ ।।
अभिषिक्तोऽभवद्राज्यं राघवस्सह सीतया ।।
पूर्वं यथा दशरथो राममूर्त्तिमपूजयत् ।। ५४ ।।
तथैव रामस्तां मूर्तिं स्वकीयां समपूजयत् ।।
सीतयाऽभ्यर्थितो रामस्तस्यै तां प्रददौ ततः ।। ५५ ।।
सा नित्यं पूजयामास सीतारामं कुलेश्वरम् ।।
यदा द्विजो वेदगर्भो रामदर्शनतत्परः ।। ५६ ।।
तदा तस्मै ददौ रामस्स्वीयां मूर्तिं दयानिधिः ।।
ततस्तदन्वये जाताः पूजयामासुरादरात् ।। ५७ ।।
अंन्ते मुकुन्दशर्मा तां गृहीत्वेभपतेः पुरीम् ।।
गत्वाऽन्ते पूजयित्वाथ त्यक्त्वा देहं दिवं गतः ।। ५८ ।।
सा तस्मिन्राजभवने स्थापिता द्रव्यमंन्दिरे ।।
जानकीमूलरघुपरामनिष्कसमन्विता ।। ५९ ।।
मंञ्जूषा वर्तते चैव मयोक्ता धनमध्यगा ।।
इदानीं तत्र राजास्ति शुभशर्माभिधस्सुधीः ।। ६० ।।
तत्र त्वदीयगमनं भविष्यति न संशयः ।।
तदानी शुभशर्मांऽपि राजा लोकांन्तरं व्रजेत् ।। ६१ ।।
अराजकत्वात्सर्वेऽपि भवेयुश्चिन्तयाऽन्विताः ।।
राजपत्न्यां तु गर्भिण्यां राज्ञि लोकन्तरं गते ।। ६२ ।।
तदैव दैवयोगात्ते राज्यप्राप्तिर्भविष्यति ।।
आद्वादशाब्दं कृत्वाऽथ राज्यं निहतकंण्टकम् ।। ६३ ।।

प्रत्यर्प्य राजपुत्राय राज्यं त्वं धनमन्दिरात् ॥
गृहीत्वा देवमञ्जूषां वाजीन्द्रमधिरुह्य च ॥ ६४ ॥
परित्यज्याथ तद्राज्यं शीघ्रं देशान्तरं व्रज ॥
इत्थं नृहरितीर्थं तमुपदिश्याखिलं तदा ॥ ६५ ॥
विररामानन्दतीर्थस्सर्वसज्जनसन्निधौ ॥
एवमानन्दतीर्थैर्यः प्रोक्तो रामागमक्रमः ॥ ६६ ॥
पुरंन्दराख्यदासैस्स गानरूपेण कीर्तितः ॥
रामायणे तु वासिष्ठे राघवागमनक्रमः ॥ ६७ ॥
व्यत्यासेन कथायाश्च प्रोक्तः सोऽपि मयोच्यते ॥
ब्रह्मा विवस्वते प्रादाद्विवस्वान्मनवे ददौ ॥ ६८ ॥
वैवस्वतमनुः प्रादादिक्ष्वाकोस्तु ततः क्रमात् ॥
राजा दशरथः प्राप्य सीताराममपूजयत् ॥ ६९ ॥
प्राप्तराज्यस्तु रामोऽपि सीतायै रघुपं ददौ ॥
सीता ददौ लक्ष्मणाय लक्ष्मणोऽपि ततः परम् ॥ ७० ॥
ददौ गृत्समदायाथ ददौ सोऽपि हनूमते ॥
हनुमान् भीमसेनाय ददौ धर्मसुताय सः
क्षेमकान्ताः क्रमादापुस्तस्यामात्यस्ततः परम् ॥ ७१ ॥
गृहीत्वा हस्तिपतये स ददौ कृष्णवर्मिणे ॥
तस्यैव शुभशर्मेति नाम चासीत्तथा परम् ॥ ७२ ॥
इत्थमुक्तं वसिष्ठेन पुराणेषु विलोकितम् ॥
तदप्युक्तं मया लोकसंशयच्छेदहेतवे ॥ ७३ ॥
पुरन्दराख्यदासानां गीतस्यायास्तथैव च ॥
वासिष्ठरामायणस्थकथायाश्च परस्परम् ॥ ७४ ॥
मूलरामागमे किञ्चिव्द्यत्यासो दृश्यतेऽधुना ॥
वाच्यं तत्र समाधानं युगकल्पव्यवस्थया ॥ ७५ ॥
जनकजारघुपुङ्गवयोस्तयोः प्रथितमध्वमुनीन्द्रमठस्थयोः ॥
विधिमुखार्चितयोः प्रतिमागमक्रमकथाश्रवणं श्रमहृद्भवेत् ॥७६॥

**इति श्रीवेणुपल्लो० मूलरामागमक्रमनिरूपणं नाम ।**

**॥ तृतीयश्शाखासर्गः ॥**

## श्रीमन्मध्वराजगुरुभ्यो नमः

## अथ चतुर्थशाखासर्गः

अथागत्य यजुर्वेदी विष्णुशास्त्र्युत्तरस्थितः ॥
ममापि देहि सन्न्यासमिति मध्वमयाचत ॥ १ ॥
तस्मै दत्वा स सन्न्यासं पूर्णप्रज्ञोऽनुकंम्पया ॥
ददौ माधवतीर्थोऽयमिति नाम स भूतले ॥
तत उत्तरदेशात्तु ब्रह्मचर्यसमन्वितः ॥
गोविन्दशास्त्री तं गत्वा सन्न्यासं समयाचत ॥
तस्मै दत्वा स सन्न्यासमक्षोभ्यमुनिरित्यथ ॥ २ ॥
नाम दत्वा चतुर्भ्योऽसौ सर्वान्ग्रंन्थानबोधयत् ॥
ततः कदाचिदानंन्दतीर्थं तं मुनिपुंङ्गवम् ॥ ३ ॥
व्याख्यानसमये प्रोचुश्शिष्याश्श्रवणलालसाः ॥
व्याख्यानसमये ऽस्माभिस्सर्वं ज्ञातं भविष्यति ॥ ४ ॥
पश्चात्तथा न भवति युष्मदग्रन्थेषु नित्यशः ॥
कथमग्रे भवेद्युष्मद्ग्रन्थर्थोऽस्माकमञ्जसा ॥ ५ ॥
इति नस्संशयस्तं त्वं परिहर्तुमिहार्हसि ॥
इत्यर्थितश्शिष्यसंघैः पुनस्तान्प्रत्युवाच ह ॥ ६ ॥
अस्मदीयग्रंन्थवाहवृषभोऽयमितः परम् ॥
त्यक्त्वा देहं द्विजो भूत्वा क्षत्ररूपो हये स्थितः ॥ ७ ॥
बध्वा करद्वयं पृष्ठे पशुवत्स नदीजले ॥
अधोमुखो मुखेनैव पिबेत्तोयं तृषातुरः ॥ ८ ॥
सोऽस्मदीयाखिलग्रन्थाशयं स्पष्टीकरिष्यति ॥
एवमानंन्दतीर्थैस्तु प्रोक्ते सति सभातले ॥ ९ ॥
मुदमापुः पद्मनाभतीर्थपूर्वकसज्जनाः ॥
अथ ते पद्मनाभास्तु पूर्णप्रज्ञगुरुत्तमैः ॥ १० ॥
अनुज्ञप्तास्संचरंन्तस्तीर्थयात्रानिमित्ततः ॥
गत्वादौ पांण्डुरङ्गाख्यक्षेत्रं गोदावरीं ततः ॥ ११ ॥

जग्मुस्सूर्यग्रहे प्राप्ते स्नानार्थं मुनिपुङ्गवाः ॥
तत्रासीत्सात्वतीसूनुस्तेषां पुर्वाश्रमोद्भवः (पूर्वाश्रमे तदा) ॥१२॥
तानागतानुपेत्याशु दण्डवत्प्रिर्ननाम च ॥
संस्थानार्हान्स तान् ज्ञात्वा हृदा प्राज्ञकुलाग्रणीः ॥
तदर्थं तान् समाश्रित्य तुर्याश्रममयाचत ॥ १३ ॥
तस्मै दत्वाऽथ सन्न्यासं प्रणवं चोपदिश्य ते ॥
तेन साकं समायाता रौप्यपीठपुरं पुनः ॥ १४ ॥
ततो नृहरितीर्थास्तैस्तीर्थयात्रानिमित्ततः ॥
अनुज्ञप्तास्सचरन्तो गजराजपुरं ययुः ॥ १५ ॥
तत्र लाङ्गूलनद्यां ते स्नात्वा तीरे सुशोभने ॥
गुहान्तरें तपोनिष्ठा जपन्तस्समुपस्थिताः॥ १६ ॥
तदैव शुभशर्माऽपि राजा लोकान्तरं गतः ॥
अराजकत्वात्सर्वाश्च प्रजाश्चिन्तां प्रपेदिरे ॥ १७ ॥
सन्तत्यभावाद्राज्ञोऽपि प्रधानप्रमुखास्तदा ॥
दत्वा मालां हस्तिहस्ते मुमुचुस्तं नृपार्थिनः ॥ १८ ॥
स वारणवरश्शुण्डादण्डेनाकृष्य मालिकाम् ॥
राजवीथीषु सर्वत्र बभ्रामान्वेषयन्नृपम् ॥ १९ ॥
अदृष्ट्वा वगरे पश्चाद्राज्ययोग्यं नरं परम् ॥
पुराद्बहिस्स गर्जन्सन्नदीतीरमथाययौ ॥ २० ॥
तत्र स्थित्वा गुहाद्वारें गजो गर्जनतत्परः ॥
न चचाल स्थलात्तस्मात्सर्वे चिन्तां प्रपेदिरे ॥ २१ ॥
गजगर्जनमाकर्ण्य जपान्ते ते गुरूत्तमाः ॥
किमेतदिति तं द्रष्टुं बहिर्याता यदृच्छया ॥ २२ ॥
दृष्ट्वा यतीन् गजवरो मालामंसे निधाय च ॥
प्रणम्य तत्पुरस्तस्थौ जनानां पश्यतां तदा ॥ २३ ॥
अथ प्रधानप्रमुखा दृष्ट्वा सन्न्यासिशेखरान् ॥
तानयाचन्त राज्यार्थं दैवाधीनाननेकशः ॥ २४ ॥

स्मृत्वा गुरूक्तं तद्वाक्यं नृहर्याख्यमुनीश्वराः ॥
मनसा गर्भिणीं ज्ञात्वा राजपत्नीं गुरूक्तितः ॥ २५ ॥
इति मत्वा प्रधानादीनाहूयैवं बभाषिरे ॥
वयं सन्न्यासिनो राज्येनास्माकं किं प्रयोजनम् ॥
तथापि भगवत्प्रीत्यै करिष्यामः प्रजाऽवनम् ॥ २७ ॥
अन्तः पुरेश(च)महिषी गर्भिण्यस्ति पतिव्रता ॥
पुत्रो वंशकरस्तस्यां भविष्यति न संशयः ॥ २८ ॥
आद्वादशाब्दं कृत्वाऽथ राज्यं निहतकण्टकम् ॥
गामिष्यामस्ततः पश्चाद्धित्वा राज्यं यथातथम् ॥ २९ ॥
इत्थं तेषां वचश्श्रुत्वा तेऽङ्गीचक्रुः प्रजास्ततः ॥
प्रातः कृत्वांन्हिकं सर्वं राज्यं ते चक्रिरे तदा ॥ ३० ॥
ततो नृहरितीर्थास्ते राज्यं निहतकण्टकम् ॥
आद्वादशाब्दं कृत्वाऽथ राजपुत्राय तत्पदम् ॥ ३१ ॥
दत्वा तैरर्थिता युष्मद्वाञ्छितं यच्च वर्तते ॥
गृह्यतां राजधान्यां तदिति ते तान्ययाचिरे ॥ ३० ॥
द्रव्यालये तु मंञ्जूषा वर्तते रामसंयुता ॥
तां नेष्यामो वयं नान्यदिच्छामो भिक्षुका इति ॥ ३१ ॥
ततस्ते सचिवै : पश्चादनुज्ञप्तास्तथाऽस्त्विति ॥
द्रव्यागारस्थितां रामसीताभ्यां च समन्विताम् ॥ ३२ ॥
रामनिष्कसमेतां च मंञ्जूषां द्रव्यमंन्दिरात् ॥
गृहीवा निखिलान् हित्वा शीघ्रं गन्तुं समुद्यताः ॥ ३३ ॥
आरुह्य वाजिनं दिव्यं स्मृत्वा मध्वमुनेर्वच : ॥
हित्वा तां राजधानीं ते सत्वरं निर्ययु : पुरात् ॥ ३४ ॥
गते रामे पुरात्कश्चिद्दैवाविष्टस्सभातले ॥
प्रोवाच रामगमनाध्दानिरस्ति न संशयः ॥ ३५ ॥
इति तस्य वचश्श्रुत्वा राजपुत्राज्ञया तदा ॥
तं रामं पुनरानेतुं तत्सैन्यं निर्गतं पुरात् ॥ ३६ ॥

दृष्ट्वा तत्सैन्यरभसमश्वारुढा मुनीश्वराः ॥
गुरुप्रसादात्तीव्रेण देशात्तस्माद्विनिर्गताः ॥ ३७ ॥
देशन्तरगतान् दृष्ट्वा तत्सैन्यं निर्गतं पुनः ॥
अद्यापि तद्दशमतस्संस्थानं नैव गच्छति ॥ ३८ ॥
गते सैन्ये विनिर्गत्य तस्मिन्नेव दिनेऽथ ते ॥
आरुह्याश्वोत्तमं सायं श्रीकूर्मक्षेत्रमागताः ॥ ३९ ॥
तत्र रामं प्रतिष्ठाप्य सीतायुक्तं शिलामयम् ॥
निर्माय देवनिलयं पुरात्तस्माद्विनिर्गताः ॥ ४० ॥
ततो नृहरितीर्थास्ते रौप्यपीठपुरं प्रति ॥
समेत्यानन्दतीर्थेभ्यो मूलराममथार्पयन् ॥ ४१ ॥
तां मूलरामप्रतिमां सीतया च समन्विताम् ॥
भजतामिष्टदां योगिकरकञ्जार्चनोचिताम् ॥ ४२ ॥
पीठमध्ये निधायाथ तद्वामे सीरजां तथा ॥
तद्दक्षिणे दिग्विजयरामं संस्थाप्य पूर्णधीः ॥ ४३ ॥
रामनिष्कं निधायाथ संपुटे व्यासमण्डिते ॥
तन्त्रसारोक्तविधिना देवार्चनमथाकरोत् ॥ ४४ ॥
सार्धत्रिमासपर्यन्तमन्यैकस्मिन्दिनेऽपि सः ॥
पूर्णप्रज्ञः पूजयित्वा संस्थानं दातुमादरात् ॥ ४५ ॥
स्नात्वोपविश्य रघुपं पीठे सुसमये तदा ॥
पद्मनाभमुनीन्द्रस्य मूर्ध्नि पूर्वोक्तसंपुटम् ॥ ४६ ॥
पञ्चन्यासादिसंयुक्तं निधायाथाभिषिच्य च ॥
तेन साकं देवपूजां पूर्णप्रज्ञश्चकार ह ॥ ४७ ॥
एवं स पद्मनाभाख्यमभिषिच्य निजे पदे ॥
पूर्णप्रज्ञस्ततस्तस्मै महासंस्थानमार्पयत् ॥ ४८ ॥
मूलरामं तथा सीतां रामं दिग्विजयाभिधम् ॥
राममुद्राङ्कितं निष्कं सालग्रामचतुष्टयम् ॥ ४९ ॥
सुदर्शनत्रयं चैवोभयवक्त्रसुदर्शनौ ॥
चक्राङ्कितशिलानां च पञ्चकं व्यासपञ्चकम् ॥ ५० ॥

शङ्खं च दक्षिणावर्तमाभिषेकं तथापरम् ॥
अक्षय्यपात्रमथ च धनुर्युगमं शरद्वयंम् ॥ ५१ ॥
इत्थं श्रीमन्मध्वमुनिस्त्रिशत्संख्यासमन्वितान् ॥
पदार्थान्पद्मनाभाख्यतीर्थायात्यन्तसाधवे ॥
दत्वा नृहरितीर्थादींस्तदधीनान् विधाय स : ॥ ५२ ॥
क्रमेणानुमता भूत्वा वर्तध्वमिति चैरयत् ॥
एवं मध्वमुनि : पद्मनाभतीर्थाय तत्पदम् ॥ ५३ ॥
दत्वा त्यक्त्वा कर्मभूमिं ययौ बदरिकाश्रमम् ॥
खेटचंन्द्र धरणींन्दु १११९ मिते शके ॥
शालिवाहननृपतेरथ पिङ्गले ॥
माघशुक्लनवमीदिवसे तदा ॥
पूर्णबोधगुरु (मुनि) राड् बदरीं ययौ ॥ ५४ ॥

**इति श्री वेणुपल्ली....रौप्यपीठपुरं त्यक्त्वा बदरिकाश्रमं प्रति मध्वमुनिगमनं नाम चतुर्थः शाखासर्गः ॥**

---

## पद्मनाभतीर्थाद्याचार्यशिष्येभ्यो नमः

## पञ्चमशाखासर्गः

अथ ते पद्मनाभाख्या : पूर्णप्रज्ञकरार्चिता : ॥
सम्यगभ्यर्च्य षड्वर्षं पश्चान्मासत्रयोत्तरम् ॥ १ ॥
दत्वा नृहरितीर्थेभ्यो महासंस्थानमप्यथ ॥
संकर्षणमुनिभ्योऽपि दत्वाऽनुज्ञां मठं प्रति ॥ २ ॥
रक्ताक्षिवर्षे ज्येष्ठकृष्णचतुर्दश्यां गुरूत्तमा : ॥
गजकोण्यां तनुं त्यक्त्वा परं हरिपुरं ययु : ॥ ३ ॥
ततस्संकर्षणाख्यास्ते मठं निर्माय विठ्ठलम् ॥
पूजयंन्तशिष्यसंघं चक्रुस्संस्थानमप्यथ ॥
एवं परम्पराप्राप्तं संकर्षणमुखैःपुरा ॥

पदं श्रीपादराज्ञां तल्लोकेषु प्रथितं किल ॥ ५ ॥
ततो नृहरितार्थैस्तत्संस्थानं कृतमादरात् ॥
तदेव मूलं (मुख्यं) संस्थानं मूलदिग्विजयार्चनात् ॥ ६ ॥
एवं ते नवनर्षाणि मासमेकमतीत्य च ॥
त्रयोविंशद्दिनांन्तेऽथ सर्वं तद्देवतार्चनम् ॥ ७ ॥
दत्वा माधवतीर्थेभ्यस्ततश्श्रीमुखवत्सरे ॥
पुष्ये कृष्णे च सप्तम्यां गजकोण्यां गुरूत्तमा : ॥ ८ ॥
तुंङ्गभद्रानदीतीरे गुरोर्वृन्दावनान्तिके ॥
त्यक्त्वा देहं हरिपदं जग्मुरत्यंन्तदुर्लभम् ॥ ९ ॥
अथ माधवतीर्थास्ते पारिव्राज्याधिराट्पदम् ॥
कृत्वाऽक्षोभ्यमुनिभ्योऽणुसंस्थानं ददुरादरात् ॥ १० ॥
सालग्रामक्षेत्रगतनरसिंहाग्रतस्स्थितम् ॥
रामं गृहीत्वा पूजार्थं दत्वाऽनुज्ञां ददुर्मुदा ॥ ११ ॥
तां रामप्रतिमां ताम्रमयीं दत्तां गुरूत्तमैः ॥
मध्ववंशाणुसंस्थानसंस्थैः पूजार्थमागताम् ॥ १२ ॥
गृहीत्वाऽक्षोभ्यतीर्थास्ते संचरंन्तोऽवनीतले ॥
वंशरामं पूजयंन्तश्चक्रुर्दिग्विजयं भुवि ॥
एवं ते कतिचित्कालं कृत्वा दिग्विजयं भुवि ॥
पुनर्गुरुपदाम्भोजदर्शनार्थमुपागताः ॥ १४ ॥
इत्थं माधवतीर्थास्तत्पदं पारंम्परागतम् ॥
कृत्वा षोडशवर्षान्ते मासाष्टकमतीत्य च ॥ १५ ॥
दिनाष्टके गतेऽक्षोभ्यमुनिभ्यः प्रीतिपूर्वकम् ॥
पीठे देवं प्रतिष्ठाप्य पूर्वोक्तविधिना ततः ॥ १६ ॥
सालग्रामक्षेत्रतोऽप्यानीतं वंशाख्यराघवम् ॥
अधोभागे निधायाथ बृहत्संपुटदक्षिणे ॥ १७ ॥
एवं नित्यं पूजयेरित्युक्त्वा पूजां विधाय च ॥
तथैकत्रिंशत्संख्याकपदार्थैस्सह तत्पदम् ॥ १८ ॥

दत्त्वा साधनपूर्त्यन्ते ततो भीमरथीतटे ।।
खेटं मणिपुरप्रान्ते माधवाख्यमुनीश्वरा : ।। १९ ।।
स्नात्वा योगोपविष्टास्ते विकृत्याव्हयवत्सरे ।।
भाद्रे दर्शे भुवं त्यक्त्वा वैकुण्ठनगरीं ययुः ।। २० ।।
ततः प्लवाभिधे वर्षेऽक्षोभ्यतीर्थमुनीश्वराः ।।
शृंगेरीसंस्थितं मत्तं विद्यारण्याख्यवादिनम् ।। २१ ।।
वादिवृंन्दाग्रगण्यं तमद्वैतमतसाधकम् ।।
श्रुत्वा तद्विजयार्थं ते जग्मुस्संस्थानसंयुताः ।। २२ ।।
सोऽथ तानागतान् श्रुत्वा भाग्यविद्यामदोद्धतः ।।
द्वारे निर्बन्धमकरोत्तेऽपि हित्वा पुनर्गताः ।। २३ ।।
तुंङ्गभद्रासंगमं ते गत्वा कूडलिसंज्ञके ।।
स्थितं नृसिंहं तपसा तुष्टुवुर्जयकांङ्क्षया ।। २४ ।।
तैरर्थितस्स भगवांस्तुष्टःस्स्वप्नगतोऽवदत् ।।
एतज्जंम्बूफलयुगं गृहाण यतिपुंङ्गव ।। २५ ।।
इक्केरिराज्ञे देह्येकं तयोर्मध्ये मुनीश्वर ।।
सन्तानार्थं गृहीत्वायं सोऽभीष्टं पूरयेत्तव ।। २६ ।।
इत्थं देवेरितं वाक्यं श्रुत्वा स्वप्नेऽतिहर्षिताः ।।
प्रबुद्धा हस्तगं जंम्बूयुग्मं दृष्ट्वाऽतिविस्मिताः ।। २७ ।।
ततो गत्वा फलं राज्ञे दत्वा सर्वं न्यवेदयन् ।।
गृहीत्वा तत्फलं राजा पत्न्यै दत्वातिहर्षितः ।। २८ ।।
ज्ञात्वा तेषामभिप्रायं साहाय्यार्थमनीकिनीम् ।।
दत्वा तान् प्रेषयामास शृंगेर्याख्यपुरं प्रति ।। २९ ।।
ततस्तमाव्हयामासुर्वाग्युद्धार्थमतन्द्रिताः ।।
प्रसंगं चक्रतुः पश्चाद्द्वैताद्वैते परस्परम् ।। ३० ।।
उभावपि समर्थौ तौ स्वस्वपक्षप्रसाधने ।।
तत्त्वमसीतिश्रुत्यर्थे सुविवादोऽभवत्तयोः ।। ३१ ।।
स्वाभिप्रेतार्थमखिलं लेखयित्वा हठादुभौ ।।
वेदान्ताचार्यनाम्ने तौ पत्रं प्रैषयतां तदा ।। ३२ ।।

स पत्रिकां विलोक्याऽथ श्लोकमेकं द्वयोरपि ॥
मिलित्वा लेखयित्वा तौ प्रेषयामास निस्स्पृहः ॥ ३३ ॥
" असिना तत्वमसिना परजीवप्रभेदिना ॥
विद्यारण्यमहारण्यमक्षोभ्यमुनिरच्छिनत् " ॥ ३४ ॥
तेनैवं प्रेषितं श्लोकं विद्यारण्यो विलोक्य सः ॥
शान्तदर्पस्तदा मंत्रस्तब्धसर्प इवाभवत् ॥ ३५ ॥
अक्षोभ्यतीर्थास्तन्मायिमठद्वारपुरस्तदा ॥
ख्यात्यर्थं स्थापयामासुर्जयस्तंभं मुदाऽन्विताः ॥ ३६ ॥
ततस्ते पुनरागत्य कुंण्डलीं तां गुरूत्तमाः
आनंन्दतीर्थोक्तवाक्यं स्मृत्वा चिन्तां प्रपेदिरे ॥ ३७ ॥
पद्मनाभमुनीन्द्राद्यैरश्वारूढः परीक्षितः ॥
नाद्याप्यस्मद्दृष्टिपथं यातस्तस्मादितः परम् ॥ ३८ ॥
किं कार्यमिति संचिन्त्य ततस्त्रैलोक्यभूषणान् ॥
करकञ्जभवान् कृत्वाऽभिषिच्य गुरुराट्पदे ॥ ३९ ॥
स्थापयित्वाऽणुसंस्थानं दत्वा पूजयितुं तदा ।:
रामसीतालक्ष्मणानां प्रतिमास्सुंन्दराश्शुभाः ॥ ४० ॥
कारयित्वा शिल्पिभिस्ताः प्रतिष्ठाप्य प्रपूज्य च ॥
दत्वा दिग्विजयार्थं तान् प्रेषयित्वा ततःपरम् ॥ ४१ ॥
इतस्ततःसंचरंन्तस्स्वयं बंकापुरं ययुः ॥
तस्मिन् बंकापुरेऽनंततुक्कोनामजुषा तदा ॥ ४२ ॥
शिल्पिना कारयामास विठ्ठलप्रतिमां शुभाम् ॥
अल्पपीठां ततश्शिल्पी मुखमात्रमशोधयत् ॥ ४३ ॥
रात्रौ स्वप्ने तमाहेशो रे रे मा स्पृश मामिति ॥
अनंततुक्कोनाम्नोऽपि स्वप्ने देवोऽवदत्तदा ॥ ४४ ॥
मामक्षोभ्यमुनिभ्यस्त्वं देहीत्येवं स विठ्ठलः ॥
ततःस्सोऽक्षोभ्यतीर्थेभ्यो विठ्ठलप्रतिमां ददौ ॥ ४५ ॥
यतःप्रसन्नः प्राप्तोऽसौ तस्मात्तन्नामकोऽभवत् ॥

प्रसन्नविठ्ठलं तेऽथ प्रतिष्ठाप्य वरासने ॥ ४६ ॥
संस्थाप्य संपुटाद्वामभागे तं समपूजयन् ॥
तत्परस्मिन् दिने स्नात्वा जपसक्तेषु तेष्वथ ॥ ४७ ॥
देवस्याराल्पूर्णमतिस्सर्वैर्दृष्टो बभूव ह ॥
अक्षोभ्यतीर्थश्रीपादास्सर्वे लोका यदृच्छया ॥ ४८ ॥
दृष्ट्वा पूर्णमतिं नत्वा तस्थुस्तं परिवार्य ते ॥
नत्वा पूर्णमतिर्देवमुपविष्टस्तदग्रतः ॥ ४९ ॥
पीठे निधाय ताः पञ्च प्रतिमास्समपूजयत् ॥
समापयित्वा देवार्चां तीर्थं पीत्वा स पूर्णधीः ॥ ५० ॥
दत्वाऽखिलेभ्यस्तत्तीर्थं तत्रैवादृश्यतां गतः ॥
दृष्ट्वा तदद्भुतं कर्म पूर्णप्रज्ञकृतं तदा ॥ ५१ ॥
अक्षोभ्यतीर्थश्रीपादा लोकास्ते विस्मितास्तदा ॥
पञ्चव्यासादीतत्संपुटस्य
दक्षे भागे संस्थितं वंशरामम् ॥
वामे भागे विठ्ठलं च प्रसन्नं
दृष्ट्वा मर्त्यास्स्वेष्टसिद्धिं लभन्ते ॥
इति श्रीमदक्षोभ्यतीमहिम
वर्णनं नाम पञ्चमशाखासर्गः ॥

---

## श्रीमदक्षोभ्यतीर्थ जयतीर्थगुरुभ्यो नमः

## षष्ठःशाखासर्गः

प्रसन्नं ते गृहीत्वाथाक्षोभ्यतीर्थमुनीश्वराः ॥
इतस्ततःसंचरन्तस्त्वेकदा काकिणीं ययुः ॥ १ ॥
तदानीं ब्राह्मणस्तत्र ब्रह्महत्याशतान्वितः ॥
आगत्य पश्चात्तापेनाक्षोभ्यतीर्थानयाचत ॥ २ ॥
भो भो शृण्वन्तु श्रीपादा मदीयं वाक्यमञ्जसा ॥
मया कृता ब्रह्महत्याश्शतसंख्यासमन्विताः ॥ ३ ॥

इदानीं भवतां पादसरोजद्वंन्द्वदर्शनात् ॥
महापापकृदप्यद्य पश्चात्तापयुतोऽस्म्यहम् ॥ ४ ॥
देहं वा त्यक्तुमिच्छामि शुध्यर्थं युष्मदाज्ञया ॥
किं मयाऽऽचरितं पूर्वं सुकृतं तत्प्रभावतः ॥ ५ ॥
दयालवो भवंन्तोऽस्मन्मुखानुद्धर्तुमागताः ॥
शांन्तिं मदीयपापस्य कारुण्याद्वक्तमर्हथ ॥ ६ ॥
इत्थं तस्य वचश्श्रुत्वाऽक्षोभ्यतीर्थमुनीश्वराः ॥
परीक्षितुं मनोदाढर्च्यमूचुस्तं शरणागतम् ॥ ७ ॥
रे त्वदीयब्रह्महत्याशतस्यापि यदीच्छसि ॥
प्रायश्चितं शृणु तदाऽस्मद्वाक्यं त्वं हितप्रदम् ॥ ८ ॥
गच्छ त्वं काकिणीतीरं तत्राश्वत्थतरुं व्रज ॥
तमारुह्याग्रपर्यन्तं पद्भ्यां तमवलंम्ब्य च ॥ ९ ॥
अधोमुखो लंम्बमानोऽस्मदाज्ञां प्रार्थयन् त्रिशः ॥
पतनेऽथ वयं पश्चादुद्धरिष्यामहे तदा ॥ १० ॥
इत्युक्तस्सतथैवाथ कृत्वा द्विः प्रार्थ्य तांस्तदा ॥
अयात्तरुवरं (अयाचत ऋतं) तस्मात्पतितुं पुनरप्यहो ॥ ११ ॥
ततस्तमुचुस्ते वृक्षादवरुह्यास्मदन्तिकम् ॥
आगच्छेति तथा कृत्वा तेभ्यस्सोऽथ ननाम च ॥ १२ ॥
अक्षोभ्यतीर्थाः पश्चात्तेऽक्षय्यपात्रस्थितांम्बुना ॥
शङ्खोदकेन तं प्रोक्ष्य तीर्थं दत्वा विधानतः ॥
कृत्वा विकल्मषं तस्मै पूर्णानुग्रहपुर्वकम् ॥ १३ ॥
स्वपंङ्क्तौ भोजनं दत्वा तस्योद्धारं प्रचक्रिरे ॥
एवं कृतेऽपि श्रीपादैः कलिकालबलादिह ॥ १४ ॥
परीक्षापूर्वकमपि नाभूल्लोकस्य सम्मतम् ॥
तच्छ्रुत्वाऽक्षोभ्यतीर्थास्तमाहूयाऽथ सभातले ॥ १५ ॥
रजकैर्धौतवसनमानाय्याथ बभाषिरे ॥
वस्त्रमेतत्त्रिधा छित्वा तत्रैकं स्थापयन्मठे ॥ १६ ॥

भल्लातकीनां तैले तन्निमज्योर्वरितं द्वयम् ॥
तत्रैकं तेन साकं तत्द्दवा मुद्रां विधाय च ॥ १७ ॥
पृथक् पृथङमठें स्थाप्य चैकं तैलाक्तंमम्बरम् ॥
अस्मै दत्वाऽशेषतीर्थस्नानार्थं प्रैषयन्नमुम् ॥ १८ ॥
वस्त्रेण साकं तीर्थेषु स्नात्वाऽऽयातु पुनस्त्वसौ ॥
सांप्रतं शुद्ध एवायं नैनं जानंन्ति पामराः ॥ १९ ॥
तदानीमस्य संशुद्धि दर्शयिष्यामहे वयम् ॥
इत्युक्त्वा ते ततस्सर्वं कारयित्वा सभातले ॥ २० ॥
शुभ्रमेकं कृष्णमेकं वस्त्रभागद्वयम् मठे ॥
निधायान्यं कृष्णवर्णं वस्त्रभागं गुरूत्तमाः ॥ २१ ॥
तस्मै दत्वा तीर्थयात्रां कृत्वाऽऽयाहीत्यवोचिरे ॥
स कृष्णवस्त्रसंयुक्तस्सर्वंतीर्थेषु चाप्लुतः ॥ २२ ॥
पुनरक्षोभ्यतीर्थानामन्तिकं चाययौ ततः ॥
तस्य वस्त्रं कृष्णवर्णं दर्शयित्वा यथास्थितम् ॥
लोकेभ्यस्तेऽक्षोभ्यतीर्था मठस्थं चानयंस्तदा ॥ २३ ॥
अथ नित्यं देवतार्चां कृत्वा तेऽथ सभातले ॥
निधाय मठसंस्थं तत्कृष्णवस्त्रं विकीर्य च ॥ २४ ॥
तीर्थप्रदानसमयेऽक्षय्यपात्रगतं जलम् ॥
शङ्खोदकं तदुपरि प्रोक्षयामासुरन्वहम् ॥ २५ ॥
यत्र यत्र प्रपतिता बिन्दवस्तत्र तत्र हि ॥
शुभ्रवर्णं समभवज्जनानां तद्धि पश्यताम् ॥ २६ ॥
ततः कतिपयैः कालैः क्रमात्सर्वं तदम्बरम् ॥
निष्कल्मषं समभवद्भल्लातकविवर्जितम् ॥ २७ ॥
अथाक्षोभ्यमुनीन्द्रास्तद्रजकैर्धौतमम्बरम् ॥
तृतीयांशं मठे पूर्वं स्थापितं लोकसन्निधौ ॥ २८ ॥
तेन साकं मिलित्वा तत्स्थापयामासुरासने ॥
दृष्ट्वा साम्यं द्वयोर्लोका विस्मिता लज्जिताश्च ते ॥ २९ ॥

एवमक्षोभ्यतीर्थेषु संचरत्स्ववनीतले ॥
शङ्खोदकस्य महिमा लोके विख्यातिमाप तैः ॥ ३० ॥
त्रैलोक्यभूपणाश्चाणुसंस्थानेन समन्विताः ॥
अक्षोभ्यतीर्थसामीप्यमाययुः काकिणीं प्रति ॥ ३१ ॥
ततस्ते निर्गतास्तस्मात्तैस्सहैव नदीतटे ॥
संचरंन्तो मलीखेटमागत्याधिपतिं तदा ॥ ३२ ॥
धोंडोरघ्वीशनामानमश्वारूढमवेक्ष्य च ॥
बध्द्वा करद्वयं पृष्ठे महाघर्मे तृषातुरम् ॥ ३३ ॥
काकिण्यां तु मुखेनैव पशुवज्जलपायिनम् ॥
समाहूय तमूचुस्ते सन्न्यासो गृह्यतामिति ॥ ३४ ॥
ओमित्युक्त्वाथ सर्वस्वं प्रेषयित्वा गृहं प्रति ॥
तेभ्यो जग्राह सन्न्यासं ददुस्तेऽपि मुदान्विताः ॥ ३५ ॥
दृष्ट्वा गृहीतसन्न्यासं तं तदा परिचारकाः ॥
गत्वा शीघ्रं गृहं तस्य पत्न्यै सर्वमबोधयन् ॥ ३६ ॥
तच्छ्रुत्वा स्वजनास्तस्य सर्वे गत्वा तदन्तिकम् ॥
कृत्वाऽट्टहासं बहुधा तं प्रगृह्य विनिर्ययुः ॥ ३७ ॥
गते यतौ तस्य गृहं पत्नी तं द्रष्टुमागता ॥
दृष्ट्वा भयङ्करं सर्परूपिणं हन्तुमागतम् ॥ ३८ ॥
भीता चुक्रोश तं दृष्ट्वा स्वीयास्सर्वे विमत्सराः ॥
लोकातीतोऽयमित्युक्त्वा तत्पदर्विनयन्विताः ॥ ३९ ॥
ततस्स पुनरागत्याक्षोभ्यतीर्थमुनीन् प्रति ॥
गत्वा तस्थौ तदीयैस्तच्छ्रुत्वा ते विस्मितास्तदा ॥ ४० ॥
जयतीर्थेति तस्मै सन्नाम दत्वा गुरूत्तमाः ॥
अनधीतं चाविदितसन्मार्गमभिषिच्य च ॥ ४१ ॥
निधाय भगवत्पादपादयोर्भारमादरात् ॥
ददुस्ते श्रीमदाचार्यदत्तं तद्देवतार्चनम् ॥ ४२ ॥
ततस्ते प्राप्य संस्थानं विद्याबलविवर्जिताः ॥
अग्रे किं कार्यमित्येवं चिन्तयामासुरन्वहम् ॥ ४३ ॥

कदाचिज्जपसक्तेषु जयतीर्थेषु सर्पराट् ॥
तदीयजिव्हामालिन्यं स्वमुखेनाजहार ह ॥ ४४ ॥
ततश्शेषे गते मुक्त्वा जयतीर्थो यदृच्छया ॥
महत्या ज्ञानसंपत्त्या परिपूर्णस्तदाऽभवत् ॥ ४५ ॥
अक्षोभ्यतीर्थास्तदृष्ट्वा तेभ्यः प्रीतिपुरस्सरम् ॥
अबोधयन्मध्वशास्त्रं पाठमात्रमतन्द्रिताः ॥ ४६ ॥
ततस्ते श्रीमदाचार्यग्रन्थानालोच्य नित्यशः ॥
अबाध्ययुक्तिकाष्टीकाश्चक्रिरे तत्प्रसादतः ॥ ४७ ॥
समाधायाक्षोभ्यतीर्थास्ततस्त्रैलोक्यभूषणान् ॥
श्रीरामप्रतिमां सीतालक्ष्मणाभ्यां समन्विताम् ॥
तदर्थं निर्मितां तेभ्यो दत्वाऽनुग्रहपूर्वकम् ॥ ४८ ॥
जम्बूफलं देवदत्तं द्वितीयं स्वमठे स्थितम् ॥
दत्वा तेभ्यस्स्वीयनाम ख्यात्यर्थं गुरुपुङ्गवाः ॥ ४९ ॥
तुङ्गभद्रासंगमस्थकूडल्यां ते यशस्करम् ॥
मठं निर्मायात्मनाम्ना कृत्वा तत्साधनान्यपि ॥ ५० ॥
शिष्यानपि तथा तेषां ततस्त्रैलोक्यभूषणान् ॥
तस्मिन् संस्थापयामासुस्तस्माल्लोकेषु विश्रुतः ॥ ५१ ॥
मठोऽन्यस्सयभूत्तेषां स च कूडलिसंज्ञकः ॥
एवमक्षोभ्यतीर्थास्ते सप्तेन्द्वष्टोत्तरं शतम् ॥
मासद्वयं तथा विंशद्दिनान्यप्यनुभुज्य च ॥ ५२ ॥
प्लवंङगमार्गशीर्षस्य कृष्णपक्षेऽक्षसंज्ञके ॥
दिने जग्मुर्हरिपदं वृष्टिखेटे धरातलात् ॥ ५३ ॥
अक्षोभ्यतीर्थमहिमा भुवनप्रसिद्ध-
श्शङ्खोदकाद्यमितकृत्यभवस्त्वगाधः ॥
यस्य श्रुतिद्वयमयं प्रतियाति सद्य-
स्संप्राप्नुयात्सकलकामितसंघसिद्धिम् ॥ ५४ ॥

**इतिश्रीवेणुपल्ली०अक्षोभ्यतीर्थमहिमवर्णनं नाम षष्ठः शाखासर्गः ॥**

## ॥ अथ मठभेदाः सप्तमशाखासर्गः ॥

ततस्तु जयतीर्थास्ते जित्वा मायिगणान्बहुन् ॥
विशद्वर्षोत्तरं सप्तमासानप्यनुभुज्य च ॥ १ ॥
वृष्टिखेटं सभागत्य गुरोर्वृन्दावनान्तिके ॥
भगवत्पाददेवार्चा कृत्वा तन्त्रोक्तमागतिः ॥ २ ॥
विद्याधिराजतीर्थेभ्यो दत्वा संस्थानमुत्तमम् ॥
विभवाषाढकृष्णाहिदिने हरिपदं ययुः ॥ ३ ॥
अथ विद्याधिराजास्ते समन्तादवनीतले ॥
संचरन्तो वादिवृन्दजयं चक्रुरनेकशः ॥ ४ ॥
एकदा श्रीमदानन्दतीर्थसंस्थानसंयुताः
ययुर्भागीरथीयात्रां कर्तुं भीमरथीतटम् ॥ ५ ॥
तत्र स्नात्वा नदीतीरे सूपविष्टा गुरूत्तमाः ॥
यदृच्छया भीमरथीजलाद्गङ्गा समुत्थिता ॥ ६ ॥
सर्वलक्षणसंयुक्ता सर्वाभरणभूषिता ॥
स्वीययात्रार्थमुद्युक्तश्रीपादान्सन्न्यवारयत् ॥ ७ ॥
तां दृष्ट्वा विस्मितास्सर्वे श्रीपादास्त्वरयाऽन्विताः ॥
साक्षाद्भागीरथीं भीमाजले स्वारात्समुत्थिताम् ॥ ८ ॥
पुण्यैरगण्यैरात्मीयैर्दैवाद्दृष्टिपथं गताम् ॥
ज्ञात्वा महार्होपचारैर्दिव्यैस्तां समपूजयन् ॥ ९ ॥
सा तैस्समर्पिताशेषवस्त्राभरणपूर्वकम् ॥
हस्तेनादाय पुरतो जलेऽदृश्या बभूव ह ॥ १० ॥
सर्वे श्रीपादमाहात्म्याद्गङ्गां दृष्टिपथं गताम् ॥
अदृश्यतां पुनः प्राप्तां दृष्ट्वाऽऽश्चर्ययुतास्तदा ॥ ११ ॥
ततस्ते निर्गतास्तस्मात्तावन्मात्रेण तोषिताः ॥
इतस्ततस्संचरन्तो राघवं समपूजयन् ॥ १२ ॥
ततौ विद्याधिराजास्ते संस्थानमनुभुज्य च ॥
राजेन्द्रेभ्यो ददुः प्रीतास्सन्न्यासं युवराट्पदम् ॥
गोपालकृष्णप्रतिमामेकां तेभ्यस्स्वपूजिताम् ॥ १३ ॥

दत्वा दिग्वजयार्थं तान्प्रेषयामासुरादरात् ॥
ततो राजेन्द्रतीर्थास्ते संचरन्तोऽवनीतले ॥ १४ ॥
गुरूणामन्तिकं नैव पुनर्याता मनस्विनः ॥
ततो विद्याधिराजास्ते तेषु कोपं बिधाय च ॥ १५ ॥
ददुः कवीन्द्रतीर्थेभ्यस्सन्न्यासं स्वयमादरात् ॥
महासंस्थानमपि ते दत्वाऽऽङ्गिरवत्सरे ॥ १६ ॥
वैशाखाद्यतृतीयायां जगन्नाथे हरिं ययुः ॥
अथ राजेन्द्रतीर्थास्तु मठं निर्माय सत्वरम् ॥ १७ ॥
संस्थानमन्यच्चक्रुस्ते व्यासराज्ञां मठस्त्वयम् ॥
ततः कवीन्द्रतीर्था अप्युनुभूय गुरोः पदम् ॥ १८ ॥
ददुर्वागीशतीर्थेभ्यस्सन्न्यासं विधिपूर्वकम् ॥
महासंस्थानमपि ते दत्वाऽथो गजसंज्ञके ॥ १९ ॥
प्रमाथ्यब्दे चैत्रशुद्धनवम्यां श्रीपतिं ययुः ॥
अथ वागीशतीर्था अप्यनुभूय पदं गुरोः ॥ २० ॥
रामचन्द्राख्यतीर्थेभ्यस्सन्न्यासं प्रददुः परम् ॥
साम्राज्यमपि ते दत्वा सुभानौ गजसंज्ञके ॥ २१ ॥
चैत्रकृष्णद्वितीयायां प्रययुः परमं पदम् ॥
ततस्तु रामचन्द्राख्यतीर्थास्साम्राज्यमागतम् ॥ २२ ॥
कृत्वा मुदा ददुश्श्रीमद्विबुधेन्द्रेभ्य एव च ॥
मठस्थरामप्रतिमामेकां साधारणीं तथा ॥ २३ ॥
जयतीर्थाचार्यदत्तं सालग्रामं हयास्यकम् ॥
दत्वाऽनुज्ञां तथा तेभ्यस्संचारार्थं महीतले ॥ २४ ॥
प्रेषयामासुरथ ते प्रसंगं चक्रिरे परैः ॥
यत्र यत्र गतास्तत्र प्रसंगं परवादिभि : ॥ २५
चक्रुस्संस्थानमर्यादां हित्वा संकुच्य चाखिलम् ॥
जित्वा मायिगणानग्रचान्सदैव जयकांङ्क्षिण : ॥ २६ ॥
गुरुभिर्बहूधाऽऽहूता अपि नैवागताः पुनः

तेषां मार्गं निरीक्ष्याथ रामचंद्रयतीश्वरा : ।। २७ ।।
विद्यानिधिमुनिभ्यस्ते सन्न्यासं ददुरादरात् ।।
निर्वा (निर्या)णसमये प्राप्ते रामचंन्द्रमुनीश्वरा : ।। २६ ।।
यरगोलमुपागत्य तत्रस्थानिदमब्रुवन् ।।
भो धर्मण्णमुखास्सर्वैश्श्रूयतामस्मदाशय : ।। २९ ।।
विबुधेन्द्रा महान्तोऽस्मन्मठे मुख्याभिमानिन : ।।
भक्तिश्रद्धादिसंयुक्ता वाक्यार्थेष्वपि कोविदा : ।। ३० ।।
विद्यानिधिमुनिभ्यस्ते चाश्रमेऽप्युत्तमा : किल ।।
संस्थानयोग्या नायाता : कालोऽप्यस्माकमागत : ।। ३१ ।।
एतेऽपि साधवो योग्या : परं त्वाश्रमतोऽधमा : ।।
तस्माद्युष्मद्गृहे देवमञ्जूषा स्थाप्यते भुवि ।। ३२ ।।
अस्मन्निर्याणतः पश्चात्षण्मासाभ्यन्तरे तु ते ।।
विबुधेन्द्राश्चागताश्चेत्सर्वं देयं न संशय : ।। ३३ ।।
नो चेद्वद्यानिधिभ्योऽस्मत्संस्थानं देयमेव हि ।।
एवं विधाय मर्यादां यरगोले गुरूत्तमा : ।।३४ ।।
कुलकर्ण्युपनामेतस्मार्तधर्मण्णमन्दिरे ।।
निक्षिप्य देवमञ्जूषां निधायोपस्करानपि ।। ३५ ।।
नलसंवत्सरे राधशुक्ले षष्ठ्यां गुरूत्तमा : ।।
श्रीरामपादसरसीरुहद्वंन्द्वार्पिताखिला : ।। ३६ ।।
त्यक्त्वा कलेवरं तत्र जग्मुस्ते परमं पदम् ।।
ततः पक्षोनषण्मासे गते धर्मण्णपूर्वकाः ।। ३७ ।।
विद्यानिधींनुपागत्य प्रोचुर्विनयपूर्वकम् ।।
स्वामिनश्श्रूयतां पूर्वं रामचन्द्रगुरूत्तमैः ।। ३८ ।।
यदुक्तं तस्य कालोऽयं किञ्चिदूनस्समागतः ।।
श्रुत्वा गुरूणां वृत्तांन्तं विबुधेंन्द्रास्तु नागताः ।। ३९ ।।
भवद्भिरङ्गीकार्यं तत्कार्यं त्वार्यैर्यथेरितम् ।।
इत्थं संप्रार्थितास्तैस्ते विद्यानिधिमुनीश्वराः ।। ४० ।।
प्रत्युचुरार्या नस्सन्ति नाङ्गीकुर्मो वयं त्विति ।।

यदि तेषामनुज्ञा स्यादङ्गीकुर्मस्तदा वयम् ॥ ४१ ॥
एवमुक्तास्ततस्तैस्ते विबुधेन्द्रान्तिकं ययुः ॥
तेषामग्रेऽशेषवार्तामुक्त्वा धर्मण्णपूर्वकाः ॥ ४२ ॥
प्रार्थयांञ्चक्रिरेऽत्यन्तनम्रवाक्यैर्युतास्तदा ॥
भवन्त एव संस्थानयोग्याश्च गुरुसम्मताः ॥ ४३ ॥
एवं तैः प्रार्थितास्तेऽथ मनसा समचिन्तयन् ॥
गुरवः पूर्वमस्माकं दत्वा सन्यासमादरात् ॥ ४४ ॥
विद्यानिधिभ्यः पश्चात्तु ददुरस्मासु कोपतः ॥
इदानीं ते हरिपदं जग्मुस्तस्मादिमे जनाः ॥ ४५ ॥
विद्यानिधिषु साधुत्वं दृष्ट्वाऽस्मासु समर्थताम् ॥
शङ्कमानास्तु संस्थानं कथमग्रे भवेदिति ॥ ४६ ॥
अस्मान्प्रार्थयितुं प्राप्ता नाङ्गीकुर्मो वयं तु तत् ॥
कथमग्रे प्रकुर्वन्ति गमिष्यामस्ततः परम् ॥ ४७ ॥
अस्मान् विहाय संस्थानं कर्तुं विद्वत्सु कः क्षमः ॥
इत्थं विचार्य मनसा ते धर्मण्णमुखागतान् ॥ ४८ ॥
प्रोचुर्नागम्यतेऽस्माभिः कैर्वा तत्क्रियतामिति ॥
एवं दत्तोत्तरास्तैस्ते निराशास्स्वपुरीं प्रति ॥ ४९ ॥
गत्वा विद्यानिधिभ्यस्तच्छ्रावयामासुरुक्तवत् ॥
तदा विचारिते रामचन्द्रतीर्था हरेः पदम् ॥ ५० ॥
गत्वाऽ भवंश्च षण्मासास्तथैकादशवासराः ॥
इति ज्ञात्वा मुहूर्तं ते विचार्योचुर्जनांश्च तान् ॥ ५१ ॥
दास्यतेऽद्यैव संस्थानं स्नानार्थं गम्यतामिति ॥
गतेषु तेषु स्नानार्थं विबुधेन्द्रास्समागताः ॥ ५२ ॥
ज्ञात्वा तेषामभिप्रायं सर्वे चिन्तां प्रपेदिरे ॥
इतः परं कथं कार्यमुभावेतौ समागतौ ॥ ५३ ॥
द्वयोरन्यतरोऽस्माकं शापं दद्यान्न संशयः ॥
इमानपि प्रेषयित्वा स्नानार्थं गम्यतामिति ५४ ॥

पश्चादुपायः कर्तव्योऽस्मत्संकटनिवर्तने ॥
उभावपि यदा स्नात्वाऽऽगच्छेतां राघवेच्छया ॥ ५५ ॥
द्वयोर्विनयतो वाच्यमस्माभिस्सामपूर्वकम् ॥
भवन्तौ बहुनीतिज्ञावेककाले समागतौ ॥ ५६ ॥
येषां स्तुत्या प्रसन्नस्स्याद्रामस्तैरर्च्यतां ततः ॥
इत्यालोच्य तथा कर्तुं सर्वे निश्चित्य संस्थिताः ॥ ५७ ॥
ततस्तन्निष्ठहृदयौ स्नात्वा तावप्युपागतौ ॥
यदा समागतौ तौ तु धर्मण्णस्य गृहं प्रति ॥ ५७ ॥
सर्वैरालोचितं प्रोक्तं ताभ्यामङ्गीकृतं च तत् ॥
तत्रादौ विबुधेन्द्रास्तं प्रार्थयन् दिवसत्रयम् ॥ ५९ ॥
उपवासेन पश्चात्तु विद्यानिधिमुनीश्वराः ॥
श्रीमद्भागवतप्रोक्तैः पञ्चमस्कन्धसंस्थितैः ॥ ६० ॥
गद्यपद्यादिभिस्स्तोत्रं चक्रिरे तद्गमानसाः ॥
यदृच्छया ऽभवत्तत्र भूविदारणमद्भुतम् ॥ ६१ ॥
दृट्ष्वा विदारितां भूमिं सर्वे ते विस्मितास्तदा ॥
विद्यानिधिमुनीन्द्रास्ते महाहर्षयुतास्तदा ॥ ६२ ॥
संबोधयित्वा सर्वांस्तांश्चोचुर्गद्गदया गिरा ॥
भो धर्मण्णमुखास्सर्वे श्रूयतामस्मदाशयः ॥ ॥ ६३ ॥
वयं सन्यासिनो भूमेः खननं नोचितं हि नः ॥
यूयं विदारितां भूमिं खनित्वोपरिसंस्थिताम् ॥ ६४ ॥
मृदमुद्धरत क्षिप्रं रामं नेष्यामहे वयम् ॥
इति तेषां वचश्श्रुत्वा बिलस्योपरि संस्थिताम् ॥ ६५ ॥
मृदमुध्दृत्य देवयस्य मञ्जूषां ते न्यवेदयन् ॥
ततो गृहीत्वा रघुपं विद्यानिधिमुनीश्वराः ॥ ६६ ॥
स्नात्वा देवार्चनं चक्रुरशेषजनसंसदि ॥
एवमानन्दतीर्थानां देवतार्चनमाप्य च ॥ ६७ ॥
विद्यानिधिमुनीन्द्रास्ते कृतकृत्यास्तदाऽभवन् ॥

विद्यानिधिश्रीगुरुशेखराणाम् ॥
तपःप्रभावाद्रघुपुङ्गवोऽयम् ॥
तेभ्यः प्रसन्नोऽभवदाशु यस्मा–
त्तस्मात्तदीयो मठ एव मुख्यः ॥ ६८ ॥

**इतिश्रीवेणु० विबुधेन्द्रविद्यानिधिश्रीपादयोर्मठभेदेन विद्यानिधि-श्रीपादमहिवर्णनं नाम ॥**

**॥ सप्तमः शाखासर्ग ॥**

---

## श्रीविद्यानिधितीर्थगुरुभ्यो नमः

## अष्टमशाखासर्गः

ततस्तु विबुधेन्द्रास्तैर्लब्धं पदमवेक्ष्य ते ॥
मेनिरे तैरपाल्यं तदस्मल्लभ्यं भवेद्ध्रुवम् ॥ १ ॥
इति निश्चित्य मनसा दत्तं स्वगुरुभिः पुरा ॥
जयतीर्थाचार्यदत्तं सालग्रामं पुरातनम् ॥ २ ॥
हयग्रीवाभिधं तत्र पूर्णप्रज्ञसुरार्चने ॥
विद्यानिधिसमीपे तु निधाय निखिलेच्छया ॥ ३ ॥
एतैरपाल्ये संस्थाने वयमेवेति निश्चिताः ॥
यस्माद्देशात्पुराऽऽयातास्तं देशं ते पुनर्ययुः ॥ ४ ॥
गतेषु तेषु पश्चात्तु विद्यानिधिमुनीश्वराः ॥
इतस्ततस्संचरन्तो बिदरीकोटमाययुः ॥ ५ ॥
तस्मिन्पुरवरे तेऽपि विबुधेन्द्रमुनीश्वराः ॥
आगत्य कलहं चक्रुर्देवतार्चनकाङ्क्षया ॥ ६ ॥
राजवीथ्यां द्वयोरासीत्करग्रहणपूर्वकः ॥
कलहोऽथ तदाऽकस्मात्पुरेशोऽपि सहानुगः ॥ ७ ॥
सर्वतस्स्वपुरं पश्यंस्तस्यां वीथ्यां समागतः ॥
स दृष्ट्वा कलहं दूतान्प्रेषयित्वा न्यवारयत् ॥ ८ ॥

लोकाः पुरेशमागत्य सर्वं तस्मै त्यवेदयन् ॥
भिक्षुकस्य सुतावेतौ भिक्षुकौ कारणान्तरात् ॥ ९ ॥
देशान्तरं गतौ, पश्चात्पिता मृत्यौ समागते ॥
स्वीयपुत्तलिके ताम्रपित्तलात्मकरूपके ॥ १० ॥
शेरुद्वयमिते भूमौ विनिक्षिप्याहाखिलांस्तदा ॥
षण्मासाभ्यन्तरे ज्येष्टाऽऽगमे पुत्तलिके त्विमे ॥ ११ ॥
देये तस्यैव पश्चात्तु कनिष्ठाय न संशयः ॥
इत्यादिश्य स सर्वांस्तान् गुरुर्मृत्युमवाप ह ॥ १२ ॥
ततष्षण्मासतः पश्चादुभावप्येकदैव तौ ॥
समागतौ तदा सर्वैरुक्तं तद्गर्तसन्निधौ ॥ १३ ॥
अत्र पुत्तलिकेऽन्तस्तस्तोत्राद्यैर्यः प्रसादयेत् ॥
तेन ग्राह्ये इति वचश्श्रुत्वाऽऽदौ ज्येष्ठ एव तु ॥ १४ ॥
उपवासं समकरोद्दिनत्रयमथापरः ॥
तुष्टावाऽथ धरा भिन्ना सोऽग्रहीज्जणनसन्निधौ ॥ १५ ॥
ततो देशान्तरं गत्वेदानीमत्र समागतौ ॥
तदर्थं कलहो जातः पुनस्ताभ्यां परस्परम् ॥ १६ ॥
इति लोकमुखैःश्श्रुत्वाऽशेषवार्तां पुरेश्वरः ॥
न चाग्रे कलहः कार्य इति दूतैरशिक्षयत् ॥ १७ ॥
परस्परं लेखयित्वा पत्रं कलहशान्तये ॥
विद्यानिधिमुनेरेव संस्थानं चेत्यघोषयत् ॥ १८ ॥
उभावपि समाधाय पंङ्क्तिभोजनपूर्वकैः
ददौ ताभ्यामनुज्ञां च म्लेञ्छराजोऽपि धर्मवित् ॥ १९ ॥
ततस्ते विबुधेन्द्रास्तु निराशा जनसंसदि ॥
श्लोकैरेव तिरश्चक्रुर्विद्यानिधिमुनीश्वरान् ॥ २० ॥
"रावणो भिक्षुरूपेण जहार जनकात्मजाम् ॥
विद्यानिधिमुनीन्द्रोऽसौ जहार रघुपुंङ्गवम् ॥ २१ ॥
बध्वैवमादिश्लोकांस्ते प्रोचुर्वै जनसंसदि ॥
ताम्रपुत्तलिका चेयं मोक्षं दास्यति किं मम ॥ २२ ॥

हृत्पद्मसंस्थितो लक्ष्मीरमणः करुणानिधिः ।।
स एव मोक्षं मे दद्यादित्युक्त्वा निर्गताः पुरात् ।। २३ ।।
ततो देशान्तरं गत्वा तत्र ते सस्थितान् जनान् ।।
संबोधयित्वा कुशलास्सर्वान् विनयपूर्वकम् ।। २४ ।।
श्लाघयित्वा नम्रवाक्यैः करुणारसपूरितैः ।।
मन्त्रमुद्राधारणादि ग्राह्यमित्यूचुरादरात् ।। २५ ।।
तदा सामाजिकाः प्रोचुः पूर्णप्रज्ञकरार्चितम् ।।
देवं विना कथं ग्राह्यं मन्त्रमुद्रादिकं भवेत् ।। २६ ।।
इत्युक्तास्ते तदा तूष्णीं स्थित्वा स्नानार्चनादिकम् ।।
कृत्वा भिक्षाप्रदानस्य समये समुपस्थिते ।। २७ ।।
ततः प्रोचुर्यदा यूयमस्मदिष्टं करिष्यथ ।।
तदा भिक्षां ग्रहिष्यामो नो चेद्यामो यथागतम् ।। २८ ।।
इत्थं तेषां वचाश्श्रुत्वा संकटाहतचेतसः ।।
केचनालोच्य तत्रस्थास्त्वंङ्गीचक्रुस्तदाऽखिलम् ।। २९ ।।
इत्थं ते देशदेशेषु शिष्यान् संपाद्य यत्नतः ।।
संस्थानं चक्रिरे स्वीयं कुम्भकोणोपनामकम् ।। ३० ।।
पराक्रमेण संपाद्य विबुधेन्द्रमुनीश्वराः ।।
कृत्वा पृथक्च संस्थानं कृतकृत्या बभूविरे ।। ३१ ।।
विद्यानिधिमुनीन्द्रास्तु तपोबलसमागतम् ।।
कृत्वा संस्थानमथ ते शार्वर्यब्दे समागते ।। ३२ ।।
औत्तरौयात्मशिष्येभ्यो दत्वा सन्न्यासमुत्तमम् ।।
रघुनाथमुनीन्द्रोऽयमिति नाम ददुस्तदा ।। ३३ ।।
ततस्ते स्वात्मसेवादिगुणान्वीक्ष्य गुरूत्तमाः ।।
महासंस्थानमखिलं दत्वाऽनुग्रहपूर्वकम् ।। ३४ ।।
रक्ताक्ष्यब्दे कार्तिकस्स कृष्णे गणपतेस्तिथौ ।।
यरगोलपुरे देहं त्यक्त्वा हरिपुरं ययुः ।। ३५ ।।
यश्श्रीमद्विबुधेन्द्रतीर्थयतिराड्विद्यानिधिश्रीगुरु– ।।
श्रैष्ठ्योद्भूतविवादसंभवकथां श्रुत्वा विदित्वा हृदा ।।

पूर्णप्रज्ञगुरूत्तमाग्यमठगश्रीरामपूजारत ।।
श्रीपादार्पिततप्तमुद्रिततनुर्धन्यस्स वै वैष्णवः ।।

इति श्रीवेणुपल्ली०मठभेदकथावर्णनं नाम्
।। अष्टमशाखासर्गः ।।

---

## श्रीरघुनाथतीर्थगुरुभ्यो नमः
## नवमशाखासर्गः

अथ ते भगवत्पादसंस्थानेन समन्विताः ।।
चक्रुर्दिग्विजयं कृष्णातीरेऽत्यंन्तमनोहरे ।। १ ।।
ततस्तु काचिद्वनिता विरक्ता मृतेन भर्त्रा सह गन्तुकामा ।।
ननाम गत्वा रघुनाथतीर्थास्तांसतेऽष्टपुत्राऽऽशु भवेत्यवोचन् ।। २ ।।
तदा समीपस्थजना गुरूंस्तानाहुस्तदीयामखिलां च वार्ताम् ।।
श्रुत्वोचुरस्मान्समभाषयद्यद्रघूत्तमस्तंत्कयमन्यथा स्यात् ।। ३ ।।
निशम्य सा तद्गुरुराजवाक्यं विश्वस्तचित्ता भवनं जगाम ।।
यदृच्छया तत्पतिराप जीवनं ततः क्रमात्सा सुषुवेऽष्टपुत्रान् ।। ४ ।
इत्थं श्रीरघुनाथाख्यतीर्थानुग्रहसंभवा ।।
संततिर्वर्ततेऽद्यापीहाष्टपुत्राभिधा भुवि ।। ५ ।।
कृत्वैवमद्भुतं कर्म रघुनाथमुनीश्वराः ।।
जग्मुः कृष्णातीरगतकोप्रग्रामं ततःपरम् ।। ६
तत्रैव विबुधेंन्द्रा अप्यागताःपूर्वमेव वेहि ।।
लक्ष्मीनारायणाख्यैश्च शिष्यैरन्यैस्सह स्थिताः ।। ७ ।।
तदानीं रघुनाथाख्यतीर्थास्तेषां स्थलं प्रति
भगवत्पाददेवार्चासहिता ययुरादरात् ।। ८ ।।
तच्छ्रुत्वा विबुधेन्द्रास्तु प्रणम्य रघुपुङ्गवम् ।।
रघुनाथमुनिश्रेष्टैस्साष्टांङ्गं सुनमस्कृताः ।। ९ ।।
तेभ्यः कृत्वा स्वयं मानं प्रेमालिङ्गनपूर्वकम् ।।
वरासने चोपवेश्य महासंस्थानगौरवात् ।। १० ।।

कारयित्वा निजैर्विप्रैः पादप्रक्षालनादिकम् ॥
योगक्षेमं विचार्याऽथ गोष्टीश्चक्रुः परस्परम् ॥ ११ ॥
अथ ते रघुनाथाख्यतीर्थास्तु विनयान्विताः ॥
विबुधेन्द्राख्यतीर्थेभ्यो ह्यपृच्छन्नैकमत्यतः ॥ १२ ॥
भवद्भिस्सांप्रतं ग्रन्थस्त्वेतेभ्यः कोऽभिधीयते ॥
अभ्यस्यन्ति कथं त्वेते लक्ष्मीनारायणाभिधाः ॥ १३ ॥
सदा भवद्भिरेतेभ्यो व्याख्यानकथनं कथम् ॥
क्रियते श्रोतुकामास्तद्वयमत्र समागताः ॥ १४ ॥
इति तेषां वचश्श्रुत्वा विबुधेन्द्रमुनीश्वराः ॥
ते जिज्ञासाधिकरणे ह्युपन्यासं प्रचक्रिरे ॥ १५ ॥
उपन्यासानंन्तरं ते लक्ष्मीनारायणाभिधाः ॥
एतत्सर्वमनूद्याथ पूर्वपक्षं प्रचक्रिरे ॥ १६ ॥
दृष्ट्वा तदुभयं श्रीमद्रघुनाथगुरूत्तमाः ॥
संतुष्टाश्लाघयांञ्चक्रुर्लक्ष्मीनारायणाभिधान् ॥ १७ ॥
भो भो भवन्तः कुशलाः परपक्षानुवादने ॥
एवं भवद्भिःश्शास्त्राण्यभ्यसनीयानि सर्वदा ॥ १८ ॥
इत्थमुक्तास्तु तैस्ते श्रीलक्ष्मीनारायणाभिधाः ॥
ऊचुर्भवन्तश्श्रीपादा न वयं भवतां समाः ॥ १९ ॥
इत्युक्ताः पुनरूचुस्ते श्रीपादा एव भो वयम् ॥
यूयं श्रीपादराजास्तु पण्डित्यातिशयादिह ॥ २० ॥
एवं तेषां नाम दत्वा गायकैस्तु सभातले ॥
घोषयामांसुरत्यन्तं तेषु प्रेमसमन्विताः ॥ २१ ॥
इत्थं श्रीपादराज्ञां तैः कृतं मानमवेक्ष्य च ॥
स्वशिष्यसन्मानमुदा विबुधेन्द्रमुनीश्वराः ॥ २२ ॥
रघुनाथयतिश्रेष्ठान्प्रेमालिङ्गनपूर्वकम् ॥
सम्मान्य स्वमठे नित्यं कृत्वाऽऽतिथ्यं विमत्सराः ॥ २३ ॥
भगवत्पाददेवार्चां तैः कृतां तेविलोक्य च ॥
तीर्थमन्त्राक्षतांस्तत्तो गृहीत्वा तु दिनत्रयम् ॥ २४ ॥

कारयित्वा तु संस्थानमर्यादां स्वीयभुसुरैः ॥
तेभ्योऽपूर्वकथां श्लाघ्यां नित्यं गुरुमुखाच्छ्रुताम् ॥ २५ ॥
पुरातनां च भगवत्पादानारभ्य चागताम् ॥
लेखयित्वा सङ्गृहीतां संस्थानस्थैः पुरातनैः ॥ २६ ॥
स्वाधीनां कथयामासुर्विबुधेन्द्रमुनीश्वराः ॥
श्रुत्वा कथां तैः कथितां तदा प्राकृतभाषया ॥ २७ ॥
लेखयित्वा स्वशिष्यैस्तां रघुनाथमुनीश्वराः ॥
विबुधेन्द्रैरनुज्ञप्ता जग्मुस्तस्माद्विनिर्गताः ॥ २८ ॥
ततः कालान्तरे पुष्यामायां सूर्यग्रहे सति ॥
अर्धोदयेन संयुक्तपुण्यकाले समागते ॥ २९ ॥
तदा तस्मात्पूर्वमेव रघुनाथमुनीश्वराः ॥
रामेश्वरं जग्मुराशु सेतुस्नानार्थमादरात् ॥ ३० ॥
यदा प्रयातास्स्नानार्थं नदा स लवणाम्बुधिः ॥
अभ्यागतो रामवेदव्यासदर्शनकांक्षया ॥ ३१ ॥
हित्वा स्वस्थानमंभोभिराप्लाव्याध्वानमम्बुधिः ॥
विघ्नेशस्थानपर्यंतमकाले ववृधेऽहनि ॥
अथासौ विप्ररूपेणाभ्येत्य श्रीपादसन्निधौ ॥ ३२ ॥
नत्वा देवं ततश्श्रीमच्छ्रीपादान्प्रत्युवाच ह. ॥
तमो भवद्भ्यश्श्रीपादाः पुरा सेतुं बबंन्ध यः ॥ ३३ ॥
तस्यैव दर्शनं कर्तुमहमस्मि समागतः ॥
इति तस्य वचश्श्रुत्वा सर्वैस्सह गुरूत्तमाः ॥ ३४ ॥
स्नात्वा देवं दर्शयित्वा तस्मै तिर्थं ददुर्मुदा ॥
अथादृश्योऽभव द्विप्रस्स्वस्थानं चाम्बुधिर्ययौ ॥ ३५ ॥
तं दृष्ट्वा विस्मितास्सर्वे श्रीपादप्रमुखास्तदा ॥
इत्थं श्रीरघुनाथाख्यतीर्थानां कीर्तिरुत्तमा ॥ ३६ ॥
नानाविधा प्रसिद्धाऽभूत्समंन्तादवनीतले ॥
इत्याद्यनेकमाहात्म्यं व्यासराजमुनीश्वराः ॥ ३७ ॥

श्रुत्वा तेषां दर्शनार्थं यरगोलमुपागताः ।।
तस्मिन्नेव स्थितांस्तेऽथ रघुनाथमुनीश्वरान् ।। ३८ ।।
साष्टांङ्गं संप्रणम्याथ नाम तेभ्यो न्यवेदयन् ।।
श्रुत्वा ऽऽगतान्व्यासमुनीन् रघुनाथमुनीश्वराः ।। ३९ ।।
जरया चर्मणी लंम्बमाने उध्द्त्य तान्भ्रुवोः ।।
वीक्ष्य सम्मान्य बहुधा क्षेमालिङ्गनपूर्वकैः ।। ४० ।।
ततस्स्नात्वा रामदेवं दर्शयामासुरादरात् ।।
शि॰येणानाय्य भिक्षान्नं जयतीर्थसरोवरे ।। ४१ ।।
त्रिर्मज्जितं जलं त्यक्त्वा स्थापितं तं निवेद्य च ।।
व्यासराजसमेतास्ते सर्वशिष्यसमन्विताः ।। ४२ ।।
भोजनं चक्रिरे तत्र रघुनाथमुनीश्वराः ।।
ततः परस्मिन् दिवसे व्यासराजमुनीश्वराः ।। ४३ ।।
अनुज्ञप्तास्सचरंन्तः पुनर्जग्मुर्यथायथम् ।।
व्यासराज–रघुनाथगुरूणां
      दर्शनोद्भवकथां कथयेद्यः ।।
तस्यें सज्जनसमूहदर्शनं
      सर्वदैव हि भवेदघापहम् ।। ४४ ।।

**इतिश्रीवेणुपल्ली०व्यासराजरघुनाथतीर्थदर्शननिरूपणं नाम**
**।। नवमः सर्गः ।।**

---

## दशमशाखासर्गः

## श्रीरघुवर्यतीर्थश्रीगुरुभ्यौं नमः ।।

रघुनाथाख्यतीर्थास्तु तत ईश्वरवत्सरे ।।
स्वपूर्वाश्रमसंबन्धिभागिनेयाय साधवे ।। १ ।।
शिष्याय दत्वा सन्न्यासमभिषिच्य गुरोः पदे ।।
रघुवर्याख्यतीर्थोऽयमिति नाम ददुस्तदा ।। २ ।।
रघुवर्यास्ततस्तेषां भूत्वा छायानुवर्तिनः ।।
गुरूणां चक्रिरे सेवां मनोवाक्कायकर्मभिः ।। ३ ।।

ततो भागीरथीयात्रां कर्तुं ते गुरुसत्तमाः ॥
मनसा कृतसंकल्पा रघुवर्यसमन्विताः ॥ ४ ॥
गजाख्यकोणमागत्य कृष्णराजसुपूजिताः ॥
व्यासराजैः कृष्णराजसहितैस्सह निर्गताः ॥ ५ ॥
पम्पाक्षेत्रं समागत्य दृष्ट्वा विजयविठ्ठलम् ॥
पद्मनाभमुनींन्द्रादिनववृंदावनानि ते ॥ ६ ॥
समीक्ष्य गंङ्गायात्रार्थं कंपलीं समुपेत्य च ॥
रंगपत्याचार्यगृहे संस्थानसहितास्स्थिताः ॥ ७ ॥
ततस्स्नातुं गतास्तेऽथ तुंङ्गभद्रानदीं प्रति ॥
राम–व्यासान्पुरस्कृत्य रघुनाथमुनीश्वराः ॥ ८ ॥
पिंङ्गलाब्दे फाल्गुनाद्यसप्तमीदिवसे तदा ॥
तुंङ्गभद्रा समायाताऽकस्मात्तीरमतीत्य सा ॥ ९ ॥
दृष्ट्वाऽऽगतां तुंङ्गभद्रां रघुनाथमुनीश्वरान् ॥
रघुवर्यव्यासमुनी ऊचतुश्चातिर्हर्षितौ ॥ १० ॥
अकालेऽभ्यागता चेयं तुंङ्गभद्रा यदृच्छया ॥
प्रायो गंङ्गा समायाता भवतां दर्शनेच्छया ॥
यत्रास्ते भगवान्मूलरामो व्याससमन्वितः ॥ ११ ॥
तत्र भागीरथी साक्षात्सदा सन्निहिता ध्रुवम् ॥
ततो भागीरथी चेयं स्वयात्रार्थं समुद्यतान् ॥ १२ ॥
युष्मान् वारयितुं साऽस्यामागता जलरूपिणी ॥
इत्थं तयोर्वचश्श्रुत्वा प्रोचुस्ते गुरुसत्तमाः ॥ १३ ॥
अस्मदाह्वानार्थमियं गंङ्गा प्रायश्स्समागता ॥
इत्युक्त्वा त्वरया स्नात्वा गंङ्गामभ्यर्च्य सादरम् ॥ १४ ॥
रंङ्गपत्याचार्यगृहं गताः गंङ्गापि निर्गता ॥
तदुत्तरदिने व्यासराजतीर्था भगोदये ॥ १५ ॥
विज्ञाप्य रघुनाथाख्यानातिथ्यं चक्रिरे मुदा ॥
तस्मिन् दिने व्यासराजरघुवर्यसमन्विताः ॥ १६ ॥

तुङ्गभद्रानदीं गत्वा स्नानं कृत्वा गुरूत्तमाः ॥
तस्यां शिलातले रम्ये सूपविष्टा जनैस्सह ॥ १७ ॥
कृत्वा जपोपसंहारं निर्माल्यं च व्यसर्जयन् ॥
तस्मिन्काले तदा नीलवर्णव्यासो यदृच्छया ॥ १८ ॥
हस्ताद्विनिस्सृतस्तुंङ्गभद्राम्भोऽन्तर्विवेश सः ॥
हाहाकृते तु श्रीपादैस्तस्यामल्पोदके तले ॥ १९ ॥
व्यासस्त्वदृश्यतां प्राप सर्वेषामपि पश्यताम् ॥
महाप्रयत्नश्च कृतस्तदन्वेषणकाङ्क्षया ॥ २० ॥
श्रीपादैरखिलैर्लोकैस्सह सप्तदिनावधि ॥
रघुवर्यव्यासराजतीर्थयोस्तु निरन्तरम् ॥ २१ ॥
भोजगित्वाऽथ श्रीपादा उपवासं प्रचक्रिरे ॥
सप्तमे दिवसे प्राप्ते रघुनाथमुनीश्वराः ॥ २२ ॥
देहं च त्यक्तुमुद्युक्ता व्यासलब्ध्यै मुनीश्वराः ॥
तस्मिन् दिनेऽवदद्व्यासस्तेषां स्वप्नगतो विभुः ॥ २३ ॥
पुरा भवद्भिश्श्रीपादा वार्नेयं संश्रुता किल ॥
विद्याधिराजश्रीपादा गङ्गास्नानार्थमादरात् ॥ २४ ॥
गन्तुं भीमरथीं प्राप्तास्तस्यां भागीरथी स्वयम् ॥
सर्वालङ्कारसंयुक्ता हस्तमुध्दृत्य तान्प्रति ॥ २५ ॥
न्यवारयन्न गन्तव्यं भवद्भिरिति तेऽत्यजन् ॥
तस्मादहं च भवतां प्रत्ययार्थं जले गतः ॥ २६ ॥
श्वः प्रभाते कूर्मरूपं कृत्वाऽऽयास्यामि तत्वतः ॥
कूर्माश्च बहवश्चादावागमिष्यन्ति तज्जलात् ॥ २७ ॥
पात्रे संस्थाप्य चैकैकं गोक्षीरेणाभिषेचयेत् ॥
योऽभिषेकेण भ्रमति क्षिप्रं तं प्रतिगृह्य च ॥ २८ ॥
पूजयेदितरान्सर्वांस्तस्यामेव परित्यजेत् ॥
इत्युक्त्वाऽद्भुतरूपोऽयं व्यासोऽप्रत्यक्षतां गतः ॥ २९ ॥
शय्याया उत्थितास्तेऽपि स्वप्नं प्रोचुस्सभातले ॥
प्रभाते निखिलैस्सार्धं ते स्नानार्थं नदीं गताः ॥ ३० ॥

स्नात्वोपविष्टाश्श्रीपादास्तस्मिन्नेव शिलातले ॥
अथाययुश्च वहवः कूर्मास्तस्माच्छिलामयाः ॥ ३१ ॥
अभिषेकान्न चलितास्त्यक्तास्ते तैस्ततः परम् ॥
पुनस्तथैव श्रीपादैस्तत्रैवान्वेषण कृते ॥ ३२ ॥
वर्णेन श्वेतनीलोऽथ कूर्मस्तस्माद्विनिर्गतः ॥
तं प्रगृह्याथ श्रीपादाः पात्रे निक्षिप्य सम्भ्रमात् ॥ ३३ ॥
पयसा शंङखमापूर्य तेऽभिषेकं प्रचक्रिरे ॥
अभिषिक्तस्स बभ्राम सर्वेषां पश्यतां तदा ॥ ३४ ॥
श्रीपादास्संपुटान्तस्तं व्यासस्थाने न्यवेशयन् ॥
व्यासराजाः कृष्णराजप्रमुखास्तं विलोक्य च ॥ ३५ ॥
अत्यद्भुतं तद्भ्रमणं दृष्ट्वा ते विस्मितास्तदा ॥
ततस्स कृष्णराजोऽपि व्यासराजसुबोधितः ॥ ३६ ॥
चके द्वादशसाहस्रविप्रसंतर्पणं तदा ॥
एवं श्रीरघुनाथाख्यतपोबलसमागतः ॥ ३७ ॥
व्यासकूर्मश्श्वेतनीलवर्णोऽद्यापि मठेऽस्त्यहो ॥
कदाचिद्रघुनाथाख्यास्सर्वं तद्देवतार्चनम् ॥ ३८ ॥
रघुवर्यसमीपे तु स्थापयित्वा गुरूत्तमाः ॥
श्रीपादराजसहितास्तीर्थयात्राप्रसंगतः ॥ ३९ ॥
शिष्येणैकेन सहिताश्चक्रुस्ते भूप्रदक्षिणम् ॥
त्रय एवं चरन्तस्ते जग्मुर्देशाननेकशः ॥ ४० ॥
श्रीपादराजमहिमा तत्रानेकविधोऽभवत् ॥
एवं ते कतिचित्कालं तीर्थयात्रां विधाय च ॥ ४१ ॥
खेटग्रामे समागत्य रघुवर्ययुजोऽभवन् ॥
ततस्ते श्रीमदाचार्यं (स्ते भगवत्पाद) दत्तं तद्देवतार्चनम् ॥ ४२ ॥
समर्प्य रघुवर्येभ्यश्श्रीकृष्णार्पणपूर्वकम् ॥
सर्वजिद्वत्सरे मार्गशीर्षमासे परे दले ॥ ४३ ॥
प्रतिपद्दिवसे तत्र परं हरिपदं ययुः ॥
रघूनाथतीर्थचरितं महाद्भुतं

भुवि विश्रुतं श्रवणयोस्सुखप्रदम् ॥
परमादरेण सततं कथयन्
मनुजो भवेद्धि दिवि पूज्यतमः ॥ १४ ॥

**इति श्रीवेणुपल्ली०रघुनाथतीर्थमहिमवर्णनं नाम**
**॥ दशमशाखासर्गः ॥**

---

## एकादशशाखासर्गः

ततस्संस्थानसंयुक्ता रघुवर्यमुनीश्वराः ॥
चातुर्मास्योपवेशार्थं मुदा मणिपुरं ययुः ॥ १ ॥
तदा पाषाणग्रामस्थम्लेञ्च्छराजो यदृच्छया ॥
तत्राकस्मादाजगाम तत्पुरं परिवेष्टितुम् ॥ २ ॥
दृष्ट्वा तत्सैन्यरभसं रघुवर्यमुनीश्वराः ॥
म्लेञ्च्छभीत्या पुरं त्यक्त्वा शीघ्रं भीमरथीं ययुः ॥ ३ ॥
अग्रे भीमरथी पूर्णा पृष्ठे सैन्यं समागतम् ॥
उभयोद्विग्नमनसो नदीं तां विविशुर्द्रुतम् ॥ ४ ॥
ज्ञात्वा तदा भीमरथी मूलरामं समागतम् ॥
भक्त्या मार्गं ददौ तेभ्यः पद्भ्यां तीर्त्वा तटं ययुः ॥ ५ ॥
तथैव गत्वा तत्सैन्यं मग्नमुर्वरितं ततः ॥
विनिर्गत्य ययौ सर्वे तद्दृष्ट्वा विस्मितास्तदा ॥ ६ ॥
ततः कालांन्तरे व्यासराजा अपि कलेर्बलात् ॥
वेदव्यासं मठान्नेतुं यत्नं चक्रुरनेकशः ॥ ७ ॥
तदसाध्यमभूदेव तेषामेव तपोबलात् ॥
सैन्यादिकं व्यासराजैस्समानीतं वृथाऽभवत् ॥ ८ ॥
ततस्सन्न्यासिनं स्वीयं मध्यतालामठं प्रति ॥
प्रेषयामासुरानेतुं व्यासं तत्र मठ स्थितम् ॥ ९ ॥
स गत्वा मध्यवाटं च क्रमात्तत्रस्थभिक्षुणा ॥
स्नेहं कृत्वा छद्मनैव शिलां निक्षिप्य सपुटे ॥ १० ॥

व्यासं गृहीत्वाऽल्पमतिर्व्यासराजान्तिके ययौ ॥
आगत्य संपुटं स्वीयं वेदव्यासेन संयुतम् ॥ ११ ॥
स्थापयामास पुरतस्तत्पूर्वदिवसे निशि ॥
स्वप्नोऽभवव्द्यासमुनेर्नेदानीं स्पृश मामिति ॥ १२ ॥
मूलरामार्चको भूत्वा चतुर्थस्त्वमितः परम् ॥
पूजयिष्यसि मद्रूपं तस्मात्प्रेषय मां पुनः ॥ १३ ॥
इति स्वप्ने देववचश्श्रुत्वोत्थाय भगोदये ॥
गृहीत्वा व्यासमायातमूचुस्सन्न्यासिनं प्रति ॥ १४ ॥
मध्यवाटं पुनर्गत्वा व्यासं दत्वाऽतिशीघ्रतः ॥
अस्मदाज्ञानुसारेण पुनरेहि मठं प्रति ॥ १५ ॥
इति तेषां वचश्श्रुत्वा वेदव्यासं प्रगृह्य च ॥
लज्जया खिन्नहृदयो मध्यवाटं पुनर्ययौ ॥ १६ ॥
तत्र सन्न्यासिनो व्यासमदृष्ट्वाऽन्यां शिलां पुनः ॥
दृष्ट्वा देहं त्यक्तुकामा उपवासं प्रचक्रिरे ॥ १७ ॥
पुनःकतिपयैर्घस्रैस्सन्न्यासिनि समागते ॥
दृष्ट्वा व्यासं पुनः प्राप्तं कृतकृत्या बभूविरे ॥ १८ ॥
ततश्शिलां परित्यक्तुमुद्युक्तास्ते यदाऽभवन् ॥
तदा स्वप्नगतो देवः प्राह सन्न्यासिनः प्रति ॥ १९ ॥
शिलेयं मम सान्निध्ययुक्ता तस्मादितः परम् ॥
पूज्या नित्यं मया साकं नात्र कार्या विचारणा ॥ २० ॥
एवं स्वप्ने व्यासवाक्यं श्रुत्वा सन्न्यासिनश्शिलाम् ॥
तत्रैव स्थापयामासुर्दृश्यतेऽद्यापि सा जनैः ॥ २१ ॥
एवं बहुविधं यत्नं कृतं व्यर्थमभूत्किल ॥
खिन्ना आसन्व्यासराजास्त्वपकीर्तिभयात्तदा ॥ २२ ॥
ततस्तु रघुवर्यश्च नन्दसंवत्सरे मुदा ॥
स्वपूर्वाश्रमसंबन्धिभागिनेयाय साधवे ॥ २३ ॥
ब्रह्मचर्यव्रतस्थाय दत्वा सन्न्यासमादरात् ॥
कृत्वाऽभिषेकं सदसि ददुर्नाम मनोहरम् ॥ २४ ॥

रघूत्तमयतीन्द्रोऽयमिति सर्वजगद्गुरोः ।।
दत्वा स्वस्याणु (दत्वा तस्याणु) संस्थानं बोधयामासुरन्वहम् ।।२५।।
अहो बलीयान्पापीयान् कलिकालस्समागतः ।।
प्रायस्संस्थानयुक्तानां मानहानिः पदे पदे ।। २६ ।।
दुराचाररतास्सर्वे मदान्धा धनगर्विताः ।।
भाग्यहीनान् यतीनस्मान्पूजयन्ति कथं खलाः ।। २७ ।।
तस्मादांन्दोलिका–च्छत्र–चामर–ध्वजसंयुताः ।।
गज–वाजि–महावाद्ययुक्ता बन्दिमुखैस्स्तुताः ।। २८ ।।
ग्रामे ग्रामे मठं कृत्वा स्थापयित्वाऽधिकारिणः ।।
यूयं भूमौ संचरध्वं पूजयन्तो रघूत्तमम् ।। २९ ।।
एवं सर्वं बोधयित्वा रघुवर्या रघूत्तमान् ।।
तत्त्वप्रकाशिकां तेभ्यो वक्तुमारेभिरे ततः ।। ३० ।।
तदानीं रघुवर्याणामन्त्यकाले समागते ।।
रघूत्तममुनेर्दत्वा देवतार्चां सनातनाम् ।। ३१ ।।
महासंस्थानमखिलं दत्वाऽनुग्रहपूर्वकम् ।।
मणूरस्थानात्मशिष्यान्वरदाचार्यभूसुरान् ।। ३२ ।।
आहूय देहप्रकृतिं कथयित्वा निजां तदा ।।
रघूत्तममुनेर्ग्रन्थो भवद्भिस्सम्यगुच्यताम् ।। ३३ ।।
एवमुक्त्वा पिङ्गलाब्दे ज्येष्ठमासे परे दले ।।
तृतीयायां भुवं त्यक्त्वा गजकोण्यां परं ययुः ।। ३४ ।।
रघुवर्यमुनेश्शुभां कथां य–
श्शृणुयात्तत्पदकञ्जसक्तचित्तः ।।
स भवेद्धरणीतलस्थविद्व–
ज्जनमुख्यः करुणास्पदश्च तेषाम् ।। ३५ ।।

**इतिश्रीमद्वेणुपल्ली॰रघुवर्यमहिमवर्णनं नाम**
**।। एकादशशाखासर्गः ।।**

---

## ॥ श्री रघूत्तमतीर्थगुरुभ्यो नमः ॥
## द्वादशशाखासर्गः

अथागत्य मणिग्रामं रघूत्तममुनीश्वराः ॥
तत्रत्यदलपत्याख्यमनुसस्रुर्गुरूत्तमाः ॥ १ ॥
तावल्लौकिकदौर्बल्यादाडम्बरविवर्जिताः ॥
कतिचिद्दिवसान्पुरध्येतुं वरदाह्वयात् ॥ २ ॥
तस्य बुद्धिरियं चासीन्मौढ्याद्दलपतेस्तदा ॥
श्रीपादेभ्योऽपि वरदाचार्यश्श्रेष्ठतमा इति ॥ ३ ॥
काषायवस्त्राश्श्रीपादास्त्वाचार्यश्शुभ्रवाससः ॥
मत्वैवं तौ समत्वेन पूजयामास सोऽल्पधीः ॥ ४ ॥
अथागत्य मठं श्रीमद्वरदाचार्यभूसुराः ॥
वक्तुमारेभिरे व्याख्यां श्रीपादेभ्यो निरन्तरम् ॥ ५ ॥
दिनत्रयं समागत्य मठं पश्चान्मदोद्धताः ॥
अहङ्कारेण संयुक्ताः पुनर्नैव समागताः ॥ ६ ॥
अनागतेषु तेष्वेवं रघूत्तममुनीश्वराः ॥
तेषां निकेतनं गत्वाऽध्ययनं चक्रिरेऽनिशम् ॥ ७ ॥
एवं स्थिते समायाता साधनद्वादशी तदा ॥
तस्यां दलपतिश्चोभावामन्त्रयत पारणे ॥ ८ ॥
पूजाप्रसक्तैश्श्रीपादैर्विलम्बितमभूत्तदा ॥
आचार्यैस्सहितश्चक्रे पारणं तान् विहाय सः ॥ ९ ॥
आपोशने स्वीकृते तैश्श्रीपादाश्च समागताः ॥
तयोरतिक्रमं स्वल्पां द्वादशीं वीक्ष्य तत्स्त्रियम् ॥ १० ॥
महानसे समाहूय तया हस्तोदकं ततः ॥
गृहीत्वा पारणं चक्रुर्जितक्रोधा गुरूत्तमाः ॥ ११ ॥
तेषां प्रकृतिमीक्ष्याथ रघूत्तममुनीश्वराः ॥
मनसा चिन्तयामासुरग्रे किं कार्यमित्यथ ॥ १२ ॥
पूर्वं तु गुरवश्चास्मानुपवेश्य गजोपरि ॥
अणुद्वारेण यातेति प्रोचुस्ते तत्कथं भवेत् ॥ १३ ॥

एवं चिन्तासमापन्ना निद्रया च वशीकृताः ॥
ततस्स्वप्नेऽवदंस्त्वेतानाश्वास्य गुरुशेखराः ॥ १४ ॥
अहो भवन्तश्श्वः प्रातस्स्नात्वा श्रीशकृपाबलात् ॥
अग्र वरदराजेभ्यो यदध्येयं तदेव हि ॥ १५ ॥
वाच्यं भवद्भिश्शिष्येभ्योऽश्रुतमप्यस्मदाज्ञया ॥
सुदुर्बोधोऽपि वाक्यार्थो विदितो वै भविष्यति ॥ १६ ॥
इत्थं स्वप्ने गुरुवचश्श्रुत्वोत्थायातिहर्षिताः ॥
शिष्यानाहूय व्याख्यानं वक्तुमारेभिरे तदा ॥ १७ ॥
तां वार्तामखिलैश्श्रुत्वा वरदाचार्यभूसुराः ॥
मनसा संशयं चक्रुरज्ञात्वा गुरुराङ्बलम् ॥ १८ ॥
रघूत्तमाख्यश्रीपादा वक्तुमारेभिरेऽश्रुतान् ॥
ग्रन्थान्कथं वदिष्यन्ति श्व एव परिदृश्यते ॥ १९ ॥
इत्थं वरदराजेषु वदत्सु स्वीयसद्मनि ॥
तस्मिन्नेव दिने तेऽपि रघूत्तममुनीश्वराः ॥ २० ॥
देवतार्चादिकं कृत्वा भुक्त्वा प्रतिदिनं यथा ॥
तथा रात्रौ समासीनाश्चक्रुः पूर्वावलोकनम् ॥ २१ ॥
श्वो वक्ष्यमाणग्रंन्थेषु वाक्यार्थे तैर्विचारिते ॥
निष्कृष्टोऽर्थस्तदा नैवाभवदेवं निशा गता ॥ २२ ॥
प्रभातसमये तेषां वाक्यार्थासक्तचेतसाम् ॥
निद्राऽऽविशतदा स्वप्ने रघुवर्यैरितीरितम् ॥ २३ ॥
वाक्यार्थे मा कृथाश्चिन्तां रघूत्तममुनीश्वराः ॥
प्रपश्यैतादृशे ग्रंन्थे पर्णे त्वेतादृशं पुटम् ॥ २४ ॥
तत्रासदृशवाक्यार्थो भवेद्दर्शनमात्रतः ॥
इतः परं तवाशेषवाक्यार्थः प्रभविष्यति ॥ २५ ॥
इत्थं तेषां वचश्श्रुत्वा रघूत्तममुनीश्वराः ॥
प्रबुद्धाश्शयनात्तस्मादुत्तस्थुर्हर्षनिर्भराः ॥ २६ ॥
दृष्ट्वा तत्रत्यवाक्यार्थं स्नानं कृत्वा ततः परम् ॥
व्याख्यानं सर्वशिष्येभ्यः प्रोचुश्शंङ्काविवर्जिताः ॥ २७

तस्मिन् दिने ते वरदाचार्यास्स्नात्वातिशीघ्रतः ॥
मठमेत्य बहिस्स्थित्वा व्याख्यानमथ शुश्रुवुः ॥ २८ ॥
तदा सुदुर्बोधवाक्ये त्वागते ते रघूत्तमाः ॥
वाक्यार्थमूचुर्निश्शंङ्काश्शिष्येभ्यस्सर्वसम्मतम् ॥ २९ ॥
तदाऽऽकर्ण्याऽथ वरदाचार्यास्संतोषनिर्भराः ॥
प्रविश्यांन्तर्हि्या (हृंदा)तेभ्यो नमस्कारान् प्रचक्रिरे ॥३०॥
ययाचिरेऽञ्जलिं बध्द्वा श्रीपादेभ्यो द्विजोत्तमाः ॥
संस्थानद्रोहमनिशमकार्षमहमित्यलम् ॥ ३१ ॥
ततस्ते बहुधा श्रीमन्मध्वशास्त्रं निरन्तरम् ॥
प्रोचुस्समस्तशिष्येभ्यो रघूत्तममुनीश्वराः ॥ ३२ ॥
एवं गुरुप्रसादेनावाप्य ज्ञानं महाद्भुतम् ॥
रघूत्तममुनिश्रेष्ठाः कृतकृत्या बभूविरे ॥ ३३ ॥
तावत्कालं तु श्रीपादैर्नित्यं सिद्धान्नभोजनम् ॥
कृतं भिक्षान्नमानीय क्वचिद्भुक्तं पुरातनैः ॥ ३४ ॥
अंसे निधाय देवार्चां दंण्डहस्ता गुरूत्तमाः ॥
पद्भ्यामेव चरन्तस्ते चक्रुर्दिग्विजयं तदा ॥ ३५ ॥
ततो गुरूणां वचनं स्मृत्वा दलपतेस्तथा ॥
उन्मत्तत्वं च मनसा विचार्य गुरुशेखराः ॥ ३६ ॥
क्रमेण शिबिका–नानावाद्य–वैभवपूर्वकान् ॥
सम्पाद्य विभवैस्साकं चक्रुर्दिग्विजयं भुवि ॥ ३७ ॥
ततस्सेवाजनांश्चक्रुः पाचकान्परिवेषकान् ॥
द्वारपालौ जलधरं देवसेवाजनौ तथा ॥ ३८ ॥
महास्वयंपाकमेव कारयित्वा निरन्तरम् ॥
समर्प्याभ्यागतैस्साकं भोक्तुमारेभिरे तदा ॥ ३९ ॥
ततः प्रधानविद्वांसस्समागत्य मठं प्रति ॥
पृथक्पृथक् स्वयं पाकं कारयित्वा निजैर्द्विजैः ॥ ४० ॥
पृथक्पृथङ्मण्डलेषु स्थापयित्वा गुरूत्तमैः ॥
महानैवेद्यसमये नैवेद्यं च समर्पितम् ॥ ४१ ॥

ततश्श्रीपादपङ्क्तौ ते स्वकीयैः परिवेषितम् ॥
भोजनं चक्रिरे नित्यं विद्वांसो यतिमानिताः ॥ ४२ ॥
अथात्मभागिनेयांस्ते समाहूय रघूत्तमाः ॥
दत्वा तुर्याश्रमं तेभ्यो नाम्ना रघूपतीञ्जगुः ॥ ४३ ॥
अभिषिच्याणुसंस्थानं दत्वा तेभ्यो गुरूत्तमाः ॥
मुदा दिग्विजयार्थं तान्प्रषयामासुरादरात् ॥ ४४ ॥
तदा रामानुजं कश्चिद्वादी जित्वा प्रसंगतः ॥
आजहार तदीयौ द्वौ हनूमद्गरुडध्वजौ ॥ ४५ ॥
तं दृष्ट्वा रघुपत्याख्यतीर्था निर्जित्य वादिनम् ॥
आजह्रुस्तौ ध्वजौ वाद्यान्दोलिकादींश्च तस्य ते ॥ ४६ ॥
अथागतं वादिवृंदं जित्वा जित्वा गुरूत्तमाः ॥
पुनर्गुरुसमीपं ते दर्शनार्थमुपागताः ॥ ४७ ॥
आगत्य रघूपत्याख्या रघूत्तममुनीश्वरान् ॥
दृष्ट्वा नत्वा ध्वजादींश्च स्वगुरुभ्यस्समार्पयन् ॥ ४८ ॥
एवं ते कतिचित्कालं गुरुसेवां विधाय च ॥
त्यक्त्वा देहं हरिपदं जग्मुरत्यन्तदुर्लभम् ॥ ४९ ॥
अथानन्तव्याससंज्ञाचार्याः परमपण्डिताः ॥
तेभ्यो गतवयस्काश्च विरक्ता ब्राह्मणोत्तमाः ॥ ५० ॥
शिष्यसंघैः परिवृतास्संचरन्तस्त्वितस्ततः ॥
रघूत्तममुनीन्द्राणां दर्शनार्थमुपागताः (समागताः) ॥ ५१ ॥
दृष्ट्वाऽऽगतानां पांण्डित्यं रघूत्तममुनीश्वराः ॥
संस्थानयोग्या इति तान्सम्मान्य श्लाघनादिभिः ॥ ५२ ॥
दत्वा सन्न्यासमेतेभ्योऽभिषिच्य गुरुराट्पदे ॥
वेदव्यासमुनीन्द्रोऽयमिति नाम ददुर्मुदा ॥ ५३ ॥
ततो मणिग्रामसंस्थवरदाचार्यभुसुरैः ॥
सम्पाद्य श्रीनिवासाख्याचार्यं विद्यार्थिनं पटुम् ॥ ५४ ॥
उपदिश्याखिलान् ग्रन्थांस्तस्मै श्रीगुरुशेखराः ॥

ददुस्तुर्याश्रमं तुष्टाः पण्डितायानुसारिणे ।। ५५ ।।
वेदेशतीर्थ इत्येवं नाम दत्वा गुरूत्तमाः ।।
स्वसमीपे सदा स्थातुमनुज्ञां प्रददुस्तदा ।।
वामसेबां ततो दत्वाऽभिषिच्य रघुपुंङ्गवम् ।। ५६ ।।
स्पृशेत्याज्ञां ददुः प्रीता वेदेशेभ्योऽनुकम्पया ।।
साकं वेदव्यासतीर्थैरुपदेशं प्रचक्रिरे ।। ५७ ।।
वेदेशतीर्थस्तदनु परं हरिपदं ययौ ।।
श्रीवेदव्यासतीर्थेभ्यो रघूत्तममुनीश्वराः ।। ५८ ।।
महासंस्थानमपि (मथ) ते दत्वा तेभ्यो रघूत्तमाः ।।
संवत्सरे मन्मथाख्ये पुष्यमासे सिते दले ।। ५९ ।।
एकादश्यां पुण्यतमे त्रिकल्याख्यपुरे तदा ।।
साधनान्ते भुवं त्यक्त्वा वैकुण्ठनगरीं ययुः ।। ६० ।।

रघूत्तमश्रीगुरुशेखराणां
लोकाभिरामं महिमानमद्धा ।।
शृण्वन्ति ये भक्तिसमन्विताास्ते ।।
समस्तशास्त्रप्रखरा भवन्ति ।। ६१ ।।

**इति श्रीमद्वेणुपल्ली० रघूत्तमतीर्थमहिमवर्णनं नाम**
**।। द्वादशशाखासर्गः ।।**

## श्रीवेदव्यासतीर्थगुरुभ्यो नमः
## त्रयोदशशाखासर्गः

ततो वेदव्यासतीर्था महासंस्थानसंयुताः ।।
इतस्ततस्संचरन्तः पिनगुंडीं समाययुः ।। १ ।।
राजवीथ्यां मठं बध्वा तस्मिस्ते गुरुशेखराः ।।
स्थितास्तस्यां सुरेन्द्राश्च व्यासराजास्समागताः ।। २ ।।
तस्मिन्पुरेऽब्रवीद्राजा सभायां समुपस्थितान् ।।
मठेष्वेतेषु कश्श्रेष्ठस्त्रिषु स प्रोच्यतामिति ।। ३ ।।

तत्र चिक्कण (क्कण्ण) नामाऽभूत्स्मार्तः परमकोविदः ॥
विचार्य संप्रवक्ष्यामीत्याह स प्रभुशेखरम् ॥ ४ ॥
नृपाज्ञया स गत्वाऽऽदौ व्यासराजमठं प्रति ॥
अपृच्छत्तानहं कस्मिन्मठे शिष्यत्वमाप्नुयाम् ॥ ५ ॥
पूर्णप्रज्ञान्समारभ्येदानीं को (के) गुरुसत्तमः (माः) ॥
तप्तमुद्राधारणं च क्व प्रशस्तं तदुच्यताम् ॥ ६ ॥
इति तेनार्थिता व्यासराजतीर्थमुनीश्वराः ॥
अस्मदीयमठे विद्यासंपदस्तीति चाब्रुवन् ॥ ७ ॥
सुरेन्द्रान्तिकमागत्य ततोऽपृच्छच्च तान्प्रति ॥
तथैव तेऽप्यूचिरे तं व्यासराजैर्यथेरितम् ॥ ८ ॥
ततो वेदव्यासतीर्थमठमेत्य प्रणम्य तान् ॥
अपृच्छत्तद्वदेवासौ ते तं प्रति बभाषिरे ॥ ९ ॥
अस्मन्मठे रामदेवश्चतुराननपूजितः ॥
वर्तते सीतया साकं रामनिष्केण संयुतः ॥ १० ॥
जगन्नाथात्समानीतो नृहर्याख्यमुनीश्वरैः ॥
पूर्णप्रज्ञान्समारभ्य पारम्पर्येण पूजितः ॥ ११ ॥
व्यासेन पूर्णप्रज्ञाय प्रदत्तास्सिकतामयाः ॥
पञ्चव्यासा यत्र संन्ति व्यासकूर्ममुखास्तथा (कूर्मपुरोगमाः) ॥ १२ ॥
रामो दिग्विजयाख्यश्च पूर्णप्रज्ञप्रतिष्ठितः ॥
रामो वंशाभिधो यत्र स्थापितो माधवाभिधैः ॥ १३ ॥
स्थापितोऽक्षोभ्यमुनिभिः प्रसन्नाभिधविठ्ठलः ॥
पञ्च व्यासेषु तत्रैको रघुनाथकरच्युतः ॥ १४ ॥
तुंङ्गभद्रां प्रविष्टोऽपि तेषामेव तपोबलात् ॥
दिनाष्टमे पुनर्लब्धः कूर्मरूपस्स एव तैः ॥ १५ ॥
क्षीराभिषेके भ्रमणाद्व्यासस्थाने निवेशितः ॥
कूर्मं क्षीराभिषेकेण भ्रमन्नद्यापि दृश्यते ॥ १६ ॥
एवंविधा देवतार्चा भगवत्पादपूर्वकैः ॥
अर्चिताऽस्मन्मठेऽद्यापि वर्तते पश्य भुसुर ॥ १७ ॥

आदौ कौपीनसंशुद्धिर्मुख्या सन्न्यासिमण्डले ॥
साऽस्त्यस्मासु परीक्षा चेद्(परीक्षां ते द)र्शयिष्यामहे वयम् ॥१८॥
इत्युक्तस्तैरनुज्ञप्तश्चिक्रणो (क्कण्णो)नृपमन्दिरम् ॥
समेत्य राज्ञे तत्सर्वं यथावत्समवेदयत् ॥ १९ ॥
ततो नृपस्स्वप्रधानान्प्रेषयित्वा स तान्प्रति ॥
समाव्हयामास सभां त्रयस्तेऽपि समागताः ॥ २० ॥
प्रत्युत्थाय नृपस्तेभ्यो मानं कृत्वा पृथक्पृथक् ॥
वचनैश्लाघयामास श्रीपादांस्तान्सभातले ॥ २१ ॥
वेदव्यासमुनीन्द्रास्तं स्वीयसंस्थानसत्कथाम् ॥
श्रावयित्वा सभामध्ये नृपं प्रति बभाषिरे ॥ २२ ॥
विद्यासंपद्धि सर्वत्र वेश्यायामपि वर्त्तते ॥
मुख्या कौपीनसंशुद्धिस्सन्न्यासिगणमण्डनम् ॥ २३ ॥
इत्युक्त्वा लोष्ठ(ह)कुण्डं तें शिष्यैरानाय्य सानलम् ॥
प्रज्वालयित्वा कौपीनं वन्हौ तस्मिन्समाक्षिपन् ॥ २४ ॥
ततस्तस्मात्समुद्धार्य तत्कौपीनं निजैर्द्विजैः ॥
बबन्धुस्ते कटौ सम्यग्वेदव्यासमुनीश्वराः ॥ २५ ॥
दृष्ट्वा तदद्भुतं वन्हेः कौपीनं पुनरागतम् ॥
श्रीपादमहिमान ते श्लाघयामासुरञ्जसा ॥ २६ ॥
अथ वेदव्यासमुनीन्परिपूज्य विशेषतः
राजाऽनुज्ञां ददौ तेभ्यस्सर्वेभ्योऽपि मुदान्वितः ॥ २७ ॥
आत्ममूलमिति ज्ञात्वा श्रीपादागमनं तदा ॥
चिक्कणस्तान्प्रणम्याथ क्षम्यतामित्युवाच ह ॥ २८ ॥
स्नात्वा तेभ्यस्तप्तमुद्रां गृहीत्वा भक्तिसंयुतः ॥
उपदिष्टोऽभवद्वेदव्यासतीर्थगुरूत्तमैः ॥ २९ ॥
ततो वेदव्यासतीर्थास्स्वीयं शिष्यं पुरातनम् ॥
समाहूय ददुस्तस्मै सन्न्यासं विधिपूर्वकम् ॥ ३० ॥
तस्मै विद्यापतिरिति नाम दत्वा गुरूत्तमाः ॥
अणुसंस्थानमपि ते ददुः प्रीतिपुरस्सरम् ॥

तेभ्यो दत्वा वंशरामं वालुकाबादरायणम् ॥
तदा दिग्विजयार्थं तान्प्रषयामासुरादरात् ॥ ३१ ॥
कंभालूरौपनामेतरामचन्द्रमुनीश्वराः ॥
व्यासराजकरोद्भूतास्तदा कर्नाटके स्थिताः ॥ ३२ ॥
तेषां कराब्जसंभूताः कृष्णद्वैपायनाव्हयाः ॥
गुरुष्वाचारसंकोचं दृष्ट्वा तस्माद्विनिर्गताः ॥ ३३ ॥
ततो वेदव्यासतीर्थसमीपं ते समेत्य च ॥
शिष्या बभूवुरुभयोर्दण्डव्यत्यासतस्तदा ॥ ३४ ॥
ततस्तेषां सदाचार–वैराग्यमुखसद्गुणान् ॥
दृष्ट्वा तेषां (तेषु) दयां कृत्वा वेदव्यासमुनीश्वराः ॥ ३५ ॥
प्रसन्नविठ्ठलं तेभ्यश्चिप्पटं बादरायणम् ॥
दत्वा संप्रेषयामासुर्विजयार्थमिमानपि ॥
ततः पूर्वे प्राप्तपदा विद्यापतिमुनीश्वराः ॥ ३६ ॥
महापाण्डित्यसंपन्नाश्चक्रुर्दिग्विजयं बहु ॥
तदा वेदव्यासतीर्थस्वप्ने श्रीमद्रघूत्तमाः ॥ ३७ ॥
संबोधयित्वा प्रोचुस्तान्वेदव्यासमुनीश्वरान् ॥
भो भोश्शृण्वंन्त्वस्मदीयवाक्यं विद्यापतिस्त्वयम् ॥ ३८ ॥
चिरस्थायी न भवति विद्याधीशं परं कुरु ॥
एवं स्वप्ने गुरुवचश्श्रुत्वोत्थाय गुरूत्तमाः ॥ ३९ ॥
चिन्तयामासुरत्यन्तं तेषु स्नेहसमन्विताः ॥
अथ श्रीमत्पाण्डुरंगीनरसिंहाख्यभुसुरान् ॥ ४० ॥
समानीय ददुस्तेभ्यस्तुर्याश्रममतन्द्रिताः ॥
तेषां दक्षिणकर्णेऽथ वेदव्यासमुनीश्वराः ॥ ४१ ॥
वामे तु विद्यापतय उपदेशं प्रचक्रिरे ॥
अभिषेकं ततः कृत्वा विद्याधीशमुनीश्वराः ॥ ४२ ॥
इति नाम ददुः प्रीता वेदव्यासमुनीश्वराः ॥
विद्यापतिकरोद्भूता विद्याधीशमुनीश्वराः ॥ ४३ ॥

इति भागवतश्रेष्ठैस्सभायां ते ह्यघोषयन् ॥
वैराग्यभाग्यसंपन्नास्तपोबलसमन्विताः ॥ ४४ ॥
जितासनारिषड्वर्गा विद्याधीशा विरेजिरे ॥
ततोऽणुसंस्थानगता विद्यापतिमुनीश्वराः ॥ ४५ ॥
भुवं त्यक्त्वा हरिपदं जग्मुः परमदुर्लभम् ॥
अथ वेदव्यासतीर्था विद्याधीशमुनीश्वरान् ॥ ४६ ॥
आहूय तेऽणुसंस्थानं ददुस्तेभ्यस्सुदुर्लभम् ॥
दत्वा वंशाभिधं रामं व्यासं च सिकतामयम् ॥ ४७ ॥
सर्वदिग्विजयार्थं तांश्चक्रुः प्रेषयितुं मनः ॥
एतस्मिन्नेव समये श्रीरङ्गाभिधपट्टणे ॥ ४८ ॥
चामराजभिधो राजा स्वोयं राज्यमपालयत् ॥
भोजनावसरे तस्य नित्यं प्राचीनकर्मणा ॥ ४९ ॥
क्रिमिरूपो ह्यन्नराशिरदृश्यत महीपतेः ॥
श्रुत्वा वेदव्यासतीर्थमाहात्म्यं स नराधिपः ॥ ५० ॥
प्रेषयामास विज्ञाप्तिपत्रमाकारणाय तान् ॥
तां पत्रिकां वाचयित्वा विद्याधीशमुनीश्वरान् ॥ ५१ ॥
प्रीत्या ते प्रेषयामासुश्चामराजमभां प्रति ॥
गतेषु तेषु राजा तानभिगम्याखिलैस्सह ॥ ५२ ॥
निरन्तरं पूजयंस्तान्स्थापयामास पट्टणे ॥
भोजनावसरे प्राप्ते श्रीपादैरभिमन्त्रितम् ॥ ५३ ॥
अन्नमानीय बुभुजे क्रिमयोऽदृश्यतां गताः ॥
राजा तदद्भुतं दृष्ट्वा तेषु भक्तिसमन्वितः ॥ ५४ ॥
ददौ तेभ्यश्चिणिग्रामं संतुष्टस्तेन कर्मणा ॥
ततो वेदव्यासतीर्थास्तानाहूय मुदान्विताः ॥ ५५ ॥
तेभ्यो दत्वाऽदृष्टलब्धं महासंस्थानमूचिरे ॥
सम्मानिता यथास्माभिः कृष्णद्वैपायनाः पुरा ॥ ५६ ॥
तथा भवद्भिरपि ते माननीया। प्रयत्नतः ॥
इत्युक्त्वा पिनगुंड्यां ते कौण्डिन्याख्यनदीतटे ॥ ५७ ॥

रामवेदव्यासपूजां विधाय परया मुदा ॥
सिद्धार्थ्यब्दे चैत्रशुक्ले द्वितीयायां गुरूत्तमाः ॥ ५८ ॥
त्यक्त्वा देहं स्वस्थचित्ताः परलोकं प्रपेदिरे ॥
इत्थं वेदव्यासतीर्थैः प्रसिद्धां
लोकेष्वन्यासाध्यकौपीनशुद्धौ ॥
ये शृण्वन्ति प्रातरुत्थाय कीर्तिं
तेषां नित्यं कामबाधा न भूयात् ॥ ५९ ॥

**इतिश्रीमद्वेणुपल्ली०वेदव्यासतीर्थमहिमवर्णनं नाम**
**॥ त्रयोदशशाखासर्गः ॥**

---

## श्रीविद्याधीशतीर्थगुरुभ्यो नमः
## अथ चतुर्दशशाखासर्गः ॥

अथ विद्याधीशतीर्थमाहात्म्यं लोकविश्रुतम् ॥
श्रीविद्याधीशविजये वर्णितं पूर्वमेव हि ॥ १ ॥
लिखित्वा स्थापितं पूर्वं मठे प्राकृतभाषया ॥
तत्सर्वमवलोक्याहं संकुच्य परिकीर्तये ॥ २ ॥
ततो विद्याधीशतीर्था महासंस्थानसंयुताः ॥
पिनगुंडिस्थविद्वद्भ्यो दत्वा तुर्याश्रमं मुदा ॥ ३ ॥
कृत्वाऽभिषेकं तैस्साकं देवपूजां विधाय च ॥
वेदनिध्याख्यतीर्थोऽयमिति नाम ददुस्तदा ॥ ४ ॥
ततो वेणुपुरीं गत्वा तत्र काश्यास्समागतम् ॥
रंगोजिभट्टमद्वैतवादिनं हठवादिनम् ॥ ५ ॥
सभायामात्मभिस्साकं प्रसंगं कर्तुमागतम् ॥
दृष्ट्वा प्रसंगं चक्रुस्ते तेन साकं सभातले ॥ ६ ॥
दर्शनादभ्रशिरस इति श्लोके तयोर्द्वयोः ॥
प्रसंगश्चाभवत्सोऽथ विद्याधीशैः पराजितः ॥ ७ ॥

त्यक्त्वा वेणुपुरीं भीत्या पलायनपरायणः ॥
जगाम पैठणं ते तमनुसृत्य गतास्तदा ॥ ८ ॥
तत्र जित्वा मायिवरं जयपत्रं प्रगृह्य ते ॥
क्रमाद्धर्मपुरीं प्रापुर्गङ्गायात्रामनोरथाः ॥
तत्र वेदनिधीनां तु समीपे गुरुशेखराः ॥
महासंस्थातमखिलं स्थापयित्वा द्विजैस्सह ॥ ९ ॥
गृहीत्वा दिग्जयं रामं द्वितीयं बादरायणम् ॥
जग्मुर्भागीरथीयात्रां कर्तुं यात्राजनैस्सह ॥ १० ॥
दिग्जयाख्येऽथ तैस्साकं गते तस्य स्थले तदा ॥
श्रीविद्यानिधितीर्थस्तु स्थापितो हस्तसंज्ञकः ॥ ११ ॥
आदौ पूर्वदिशं गत्वा सप्तसागरमेत्य ते ॥
वसिष्ठसागरं गत्वा स्नानं चक्रुर्विधानतः ॥ १२ ॥
तत्र स्वादूदराहित्याल्लोकानुग्रहकाङ्क्षया ॥
श्रीपादाः खन्यतामत्रेत्युक्त्वा दण्डेन भूतलम् ॥ १३ ॥
अदर्शयंस्ते खनिते जनैस्स्वादूदमागतम् ॥
तदा श्रीपादमाहात्म्यं दृष्ट्वा सर्वेऽतिविस्मिताः ॥ १४ ॥
ततः काशीपुरं प्राप्य गङ्गास्नानं विधाय च ॥
गयामवाप्य ते फल्गुतीरे वासं प्रचक्रिरे ॥ १५ ॥
तत्र पिण्डप्रदानार्थं तत्रत्यैस्तु द्विजातिभिः ॥
साकं यात्राद्विजानां च विवादस्समजायत ॥ १६ ॥
एवं विवादे सुचिरं प्रवृत्ते तस्य शान्तये ॥
तदा विद्याधीशतीर्थैर्निश्चितं जनसंसदि ॥ १७ ॥
अस्मद्दिग्विजयो रामः फल्गुतीरे समास्थितः ॥
तस्मादियं धरा रामगयाऽस्माकं न संशयः ॥ १७ ॥
इति निश्चित्य तत्रैव गृहान्कृत्वा पृथक्पृथक् ॥
वासं चक्रुर्नदीतीरे विद्याधीशास्सहाखिलैः ॥ १९ ॥
नित्यं स्नात्वा देवपूजां विधाय गुरुसत्तमाः ॥
बहिरागत्य सर्वेषां ददुस्तीर्थं निरन्तरम् ॥ २० ॥

तत्रासीद्बदरीशाखावृतिश्शुष्का गृहाङ्गणे ॥
तस्यां तु पतितास्तीर्थदानै शंङखोदबिंन्दवः ॥ २१ ॥
यत्र यत्र प्रपतितास्संजातास्तत्र पल्लवाः ॥
दिनैः कतिपयैस्सर्वाः क्रमाद्वृक्षा बभूविरे ॥ २२ ॥
दृष्ट्वा तदद्भुतं कर्म स्वामिनां महतीं तदा ॥
गयाविप्रास्समागत्य प्रणम्याथ ययाचिरे ॥ २३ ॥
स्वामिभिः क्षम्यतामस्मदपराधः कृपालुभिः ॥
वयं शिष्या भविष्यामस्तप्तमुद्रादिधारणैः ॥ २४ ॥
अद्यैव विष्णुपादस्य दर्शनार्थं हि गम्यताम् ॥
क्रियन्तां पिण्डदानानि सर्वैर्भूस्त्यज्यतामियम् ॥ २५ ॥
एवं संप्रार्थितास्तैस्ते विद्याधीशमुनीश्वराः ॥
कांश्चिद्द्विजान् वैष्णवांश्च कृत्वा विष्णुपदं गताः ॥ २६ ॥
श्राद्धानि कारयित्वाऽथ सर्वैः प्रीतिपुरस्सरम् ॥
स्वयं दंण्डोदकं दत्वा ययुर्बदरिकाश्रमम् ॥ २७ ॥
शीतकुण्डोदके स्नात्वा वन्हिकुंण्डोदकं ततः ॥
अस्पृष्ट्वा शीतपीडां तां निर्द्वन्द्वत्वान्न मेनिरे ॥२८॥
पुनरागत्य ते चैकचक्राख्यनगरं प्रति ॥
अन्तकाले समायाते तत्र वासं प्रचक्रिरे ॥ २९ ॥
तदानीं वेदनिध्याख्यतीर्थेभ्यो गौप्यरायसम् ॥
लिखित्वा प्रेषयामासुस्तत्क्रमश्च मयोच्यते ॥ ३० ॥
वयं बदरिकायात्रां कृत्वाऽकस्मात्समागताः ॥
एकचक्राख्यनगरं प्रति यात्राजनैस्सह ॥ ३१ ॥
अस्माभिः प्रेषितश्श्रीमद्रामो दिग्विजयाभिधः ॥
तथैव वालुकाव्यासो द्वितीयस्सह साधनैः ॥ ३२ ॥
प्रगृह्यतां भवद्भिश्च गम्यतां चोलमंण्डलम् ॥
तत्र कंभालूररामचंन्द्रतीर्था मदोद्धताः ॥ ३३ ॥
तेषां दर्पोऽपहर्तव्यः कृष्णद्वैपायनेष्वथ ॥
वर्त्तते विठ्ठलो बादरायणश्चिप्पटाकृतिः ॥ ३४ ॥

ब्राह्मणैस्सह संस्थानसंस्थैस्सेवापरायणैः ॥
तावानाय्य महोपायैर्मठपीठे निवेश्यताम् ॥ ३५ ॥
इत्थं ते रायसं तेभ्यः प्रेषयित्वाऽखिलं ततः ॥
प्रजापत्याव्हये वर्षे पुष्यमासे परे दले ॥ ३५ ॥
चतुर्दशीदिने प्रातस्स्नात्वा शुद्धासने स्थिताः ॥
सन्नियम्येन्द्रियग्रामं परं हरिपदं ययुः ॥ ३७ ॥
श्रीविद्याधीशतीर्थाचरितसुचरितं कीर्तयेद्यः प्रभाते
सोऽस्मिंस्तत्पादयुग्मार्पितसकलशुभाचारविध्वस्तपापः ॥
जित्वा सर्वेन्द्रियाणि प्रतिदिवसमलं साधयेत्साधनानि
श्रीमद्विष्णोः प्रियाणि व्रतनियमसुखादीनि तेषां प्रसादात् ॥३८॥

**इति श्रीविद्याधीशतीर्थमहिमवर्णनं नाम**

**॥ चतुर्दशशाखासर्गः ॥**

---

**श्रीवेदनिधितीर्थ–श्रीराघवेन्द्रतीर्थगुरुभ्यो नमः**

## अथ पञ्चदशशाखासर्गः ॥

श्रीविद्याधीशतीर्थेषु परलोकं गतेष्वथ ॥
गृहीत्वा दिग्जयं रामं विप्रास्तस्मात्प्रतस्थिरे ॥ १ ॥
आगत्य ते धर्मपुरीं रामं दिग्विजयाभिधम् ॥
पदार्थान् रायसं वेदनिधिभ्योऽथ न्यवेदयन् ॥ २ ॥
ते मिलित्वा देवतार्चा महासंस्थानसंयुताः ॥
दत्वा तुर्याश्रमं स्वीयशिष्याय विधिपूर्वकम् ॥ ३ ॥
सत्यव्रताभिधं कृत्वा धर्मपुर्यां निधाय तम् ॥
कर्णाटकं गन्तुकामास्तस्माद्देशात्प्रतस्थिरे ॥ ४ ॥
तदानीं राघवेन्द्राणां शिष्यः कर्णाटके स्थितः ॥
स विप्रो म्लेञ्च्छसंसर्गात्प्रायश्चित्तचिकीर्षया ॥ ५ ॥
गुरूणामन्तिकं गच्छन्मार्गे श्रीमुष्णमेत्य च ॥
तत्र कंभालूरसंज्ञरामचन्द्रमुनीश्वरैः ॥ ६ ॥

पृष्टस्तानाह तत्सर्वं कर्णावाच्छादयंश्च ते ।।
असाध्यमिति पश्चात्स कुंम्भकोणमवाप्य च ।। ७ ।।
तत्सर्वं राघवेंन्द्रेभ्यः कथयित्वा सभातले ।।
तेषामाज्ञानुसारेण प्रायश्चितं गृहीतवान् ।। ८ ।।
श्रुत्वा स्वकीयैस्तां वार्तां रामचंन्द्रयतीश्वराः ।।
क्रोधाच्चक्रुर्बहिष्कारं राघवेंन्द्रमठस्य ते ।। ९ ।।
तदर्थं वेदनिध्याख्यतीर्थेभ्यस्स्वीयरायसम् ।।
लेखयित्वा प्रेषितं तैर्वस्त्रेण सहितं तदा ।। १० ।।
दृष्ट्वा स्वपक्षपातार्थं लिखितं रायसं च तैः ।।
रायसस्थमभिप्रायं वाचयित्वा गुरूत्तमाः ।। ११ ।।
कृत्वा तदुपरि क्रोधं प्रोचुस्ते जनसंसदि ॥
वयमाज्ञाधारकाः किं परसंस्थानशिक्षणे ।। १२ ।।
समर्थास्तैरपि कृतं शास्त्रौक्तं स्यान्न संशयः ।।
इत्युक्त्वा वेदनिध्याख्यतीर्थास्तैः प्रेषितं पुनः ।। १३ ।।
निवृत्य प्रेषयित्वाऽथ तद्वस्त्रं रायसं पुनः ।।
राघवेन्द्रमठीयैस्ते प्रावर्तन्त यथा पुरा ।। १४ ।।
तां वार्तां स्वजनैश्श्रुत्वा राघवेंन्द्रमुनीश्वराः ।।
वेदनिध्याख्यतीर्थानां दर्शनार्थं समागताः ।। १५ ।।
बालगुंडापुरप्रांन्ते वापबद्धाद्रिवर्त्मनि ।।
आरामेऽभूद्द्वयोस्तत्र दर्शनं तु परस्परम् ।। १६ ।।
अथागतान् राघवेंन्द्रान्मानयित्वा सभातले ।।
एकपङ्क्तौ भोजनं तैस्साकं चक्रुर्गुरूत्तमाः ।। १७ ।।
अथोपविष्ठास्सदसि राघवेंन्द्रमुनीश्वराः ।।
श्रीवेदनिधितीर्थेभ्यस्स्वहस्ताक्षरपत्रिकाम् ।। १८ ।।
लिखित्वा पुरतस्तेषां स्थापयित्वाऽतिनिस्स्पृहाः ।।
प्रपश्यतेति तानूचुर्मुदा कपटवर्जिताः ।। १९ ।।
अथ तैर्लिखितं पत्रं गृहींत्वा गुरुसत्तमाः ।।
आरेभिरे वाचयितुं तत्क्रमश्च मयोच्यते ।। २० ।।

पुरा राचूरदेशेऽभून्नारायणयतिस्तदा ॥
वेदव्यासमुनिश्रेष्ठैस्सन्न्यासं सं गृहीतवान् ॥ २१ ॥
स बंकापुरमागत्य पूजनार्थं सदाऽऽत्मना ॥
शिल्पिना कारयामास राममूर्ती मनोहरे ॥ २२ ॥
ते स चक्रे ताम्रमय्यौ बुद्ध्या वर्तुलपीठगे ॥
प्रतिष्ठाप्य स तत्रैकां स्वमित्राय ददौ मुदा ॥ २३ ॥
माल(मालि)गीतिर्मलाख्यानभट्टायैकां समर्प्य ताम् ॥
द्वितीयां परया भक्त्या स्वयमेव निरन्तरम् ॥ २४ ॥
पूजयन्पुनरागत्य राचुरेऽतिमनोहरे ॥
गृहे गृहे गृहस्थानां नित्यं भुञ्जन्नुवास ह ॥ २५ ॥
शिष्यमेकं स्वसेवार्थं कृत्वा नित्यं गृहे गृहे ॥
देवार्चनादिकं कुर्वन्भुञ्जन्नेवमुवास ह ॥
तस्यामासीन्मठाध्यक्षो मुरार्याचार्यनामकः ॥
श्रीपादेभ्योऽलिखत्पत्रं स्वयं विज्ञप्ति (विन्नाह)पूर्वकम् ॥ २६ ॥
नारायणाख्यसन्न्यासी राचूरेऽत्र निरन्तरम् ॥
कुर्वन्संस्थानमर्यादामाज्ञामुल्लंङ्घ्य वर्तते ॥ २७ ॥
शिक्षापत्रं प्रेषणीयं भिक्षवे गुरुशेखरैः ॥
नो चेत्सर्वेऽप्येवमेव चरिष्यन्ति न संशयः ॥ २८ ॥
एवं लिखित्वा विज्ञप्ति(लेखयित्वेति बिन्नाह)पत्रं तेभ्योऽतिशीघ्रतः॥
आनयत्स बहिष्कारपत्रमात्मस्थलं प्रति ॥ २९ ॥
तां पत्रिकां सभामध्ये मुरार्याचार्यनामकः ॥
वाचयित्वा बहिष्कारं चक्रे सन्न्यासिने तदा ॥ ३० ॥
स नारायणसन्न्यासी तस्माद्गुरुबहिष्कृतः ॥
गत्वा सुधीन्द्रसामीप्यं तेषां शिष्यो बभूव ह ॥ ३१ ॥
दंण्डव्यत्यासतस्तेऽपि शिष्यं कृत्वा समागतम् ॥
क्रमात्तस्य समीपस्थां प्रतिमां ददृशुस्तदा ॥ ३२ ॥
अथो रहस्तमाहूय प्रोचुर्विनयपूर्वकम् ॥
किं वक्तव्यं त्वमेवात्र प्रीतिपूर्वं समागतः ॥ ३३ ॥

अकारणान्मनःपूर्वं शिष्यत्वं प्राप्तवान् किल ॥
अतोऽस्मन्मुख्यशिष्यस्त्वमस्मदीयं वचश्शृणु ॥ ३४ ॥
समीपे भवतो रामप्रतिमा याऽस्ति शोभना ॥
पूजार्थं सा त्वयाऽस्माकं दातव्या प्रीतिपूर्वकम् ॥ ३५ ॥
गृहीत्वा मूलरामस्य प्रतिमां लोकसन्निधौ ॥
वदामोऽथ त्वयाप्येवं वक्तव्यं लोकसन्निधौ ॥ ३६ ॥
इति तेषां वचश्शृत्वा मनसा पापशंङ्कितः ॥
ऊचे तेभ्योऽपि दाक्षिण्यमकुर्वन्विनयान्वितः ॥ ३७ ॥
मयि स्थितां कथमिमां कृत्रिमां प्रतिमामहम् ॥
मूलरामस्य वक्ष्यामि देवद्रोही भवाम्यहो (म्यहम्) ॥ ३८ ॥
इति तस्य वचश्श्रुत्वा प्रोचुस्ते कार्यतत्पराः ॥
पापमस्माकमेवैतत्तव किं नात्र संशयः ॥ ३९ ॥
इत्थं तेषां वचश्श्रुत्वा संकटाहृतचेतनः ॥
ददौ स्वीयां राघवस्य प्रतिमा(ददौ रामस्य प्रतिमां स स्वीया)
मात्मकारिताम् ॥ ४० ॥
तां गृहीत्वाऽथ हस्ताभ्यां रंगवल्यादिसाधनैः ॥
घर्षयित्वा बहुदिनं कृत्वा मूर्ति पुरातनाम् ॥ ४१ ॥
पूजनार्थं स्थापयित्वा बध्वा श्लोकं स्वसाधकम् ॥
लोकेषु प्रोचिरे यं ते सुधीन्द्रास्सोऽत्र लिख्यते ॥ ४२ ॥
अन्यैरपहृतां मूलमूर्ति रघुपतेश्शुभाम् ॥
आजहार पुनर्मौल्याच्छ्रीसुधीन्द्राभिधो गुरुः ॥ ४३ ॥
इत्थं श्लोकं कल्पयित्वा कृत्रिमप्रतिमां निजाम् ॥
विश्वकर्मकृतामुक्त्वा देवद्रोहं प्रचक्रिरे ॥ ४४ ॥
ततो नारायणाख्यस्य तस्य सन्न्यासिनोऽखिलम् ॥
शरीरं कुष्ठरोगेण विवर्णं मलिनीकृतम् ॥ ४५ ॥
तदर्थं वेंङ्कटाद्रिं स गत्वा स्नात्वा भगोदये ॥
गरुडस्तंम्भसामीप्ये शिश्ये संप्रार्थयन्हरिम् ॥ ४६ ॥

तदा स्वप्ने हरेर्दासी शयानं तमुवाच ह ॥
विना गुरुप्रसादात्ते त्वग्दोषो न गमिष्यति ॥ ४७ ॥
स्वप्नमित्थं स दृष्ट्वाथोत्थाय देवं प्रणम्य च ॥
गुरुप्रसादसिध्यर्थंतत्समीपं गतोऽभवत् ॥ ४८ ॥
मालगीतिर्मलाख्यानमध्यस्थेनाभिगम्य तान् ॥
लिखित्वा सर्ववृत्तांन्तं पत्रे विज्ञप्तिसंज्ञके ॥ ४९ ॥
ययाचे बहुधा तेभ्यः प्रसन्नास्ते बभूविरे ॥ ५० ॥
कृपया ते ततस्तस्मै हस्तशौचस्य मृत्तिकाम् ॥
लेपयस्व सदेत्याज्ञां ददुः प्रीतिपुरस्सरम् ॥ ५१ ॥
ततस्तस्य शरीरं तत्क्रमाच्छुद्धिमवाप ह ॥
तत्पत्रं चास्ति भवतां मठेऽद्यापि पुरातनम् ॥ ५२ ॥
अहो भवन्तश्श्रीपादास्स्वाभाविकदयालवः ॥
अस्मदार्यैर्वृथाऽत्यन्तं भवद्भ्योऽपकृतं किल ॥ ५३ ॥
तथाप्यस्मासूपकृतं भवद्भिः प्रीतिपूर्वकम् ॥
कृपालूनां च भवतामग्रेऽस्मन्मुखपङ्कजात् ॥ ५४ ॥
वाणी बहिस्सर्वथैव न निस्सरति लज्जया ॥
किं वक्तव्यमतोऽस्माभिर्भवद्भ्यो लिखितं त्विदम् ॥ ५५ ॥
इत्थं तैर्लिखितं पत्रं श्रीवेदनिधिसत्तमाः ॥
विलोक्य स्थापयामासुर्मठेऽद्याप्यस्ति तद्ध्रुवम् ॥ ५६ ॥
ततश्चोभौ सभामध्ये गोष्ठीः कृत्वा परस्परम् ॥
वापंबट्वाद्रिमार्गेण जग्मतुश्चोलमण्डलम् ॥ ५७ ॥
उभावपि मिलित्वैव संचरन्तस्त्वितस्ततः ॥
क्रमेण जग्मतुर्विद्वन्मण्डलं चोलमंण्डलम् ॥ ५८ ॥
एवं तैस्सहिता वेदनिधितीर्थमुनीश्वराः ॥
गत्वा चंदीमातमशिष्यैः कारयामासुरर्चनम् ॥ ५९ ॥
ऐकमत्यं तयोश्श्रुत्वा कम्भालुरोपनामकाः ॥
उभयोर्मठयोश्चापि बहिष्कारं प्रचक्रिरे ॥ ६० ॥

ततो मध्यद्वीपराज्यं राघवेन्द्रमुनीश्वरान् ॥
प्रेषयित्वाऽथ श्रीमुष्णं स्वयं जग्मुर्गुरूत्तमाः ॥ ६१ ॥
इत्थं श्रीवरराघवेन्द्रमुनिभिर्यत्सख्यमादौ कृतं ॥
हित्वाऽशेषपुरातनाचरितदुस्साध्याहितत्वादिकम् ॥
श्रीमद्वेदनिधिप्रसिद्धगुरुभिस्साकं जनाल्हादकं ॥
श्रुत्वा तद्विषयोद्भवां वरकथां मर्त्योऽखिलं प्रान्प्रुयात् ॥ ६२ ॥
**इति श्रीमद्वणुपल्ली० राघवेंद्रतोर्थनिधितीर्थयोस्सख्यकथनं नाम**
**॥ पञ्चदशशाखाखा सर्ग. ॥**

---

## ॥ श्रीवेदनिधितीर्थगुरुभ्यौ नमः ॥
## षोडशशाखासर्गः

तदा मठत्रयस्थानां कलहोऽभून्निरन्तरम् ॥
व्यासराजमठस्थास्तैर्निर्जिताश्च पदे पदे ॥ १ ॥
ततः कम्बालूररामचन्द्रतीर्थगलेऽम्बरम् ॥
क्षिप्त्वाऽथाकर्षणं चक्रुः प्रसंगार्थं गुरूत्तमाः ॥ २ ॥
परिहृत्य गलाद्वस्त्रं रामचन्द्रमुनीश्वराः ॥
छन्नरूपास्ततो रात्रौ जग्मुस्तंजावरं प्रति ॥ ३ ॥
प्रातरेतेऽपि तदनु गत्वा तंजावरं प्रति ॥
आह्वयामासुरत्यंन्तं प्रसंगार्थमतन्द्रिताः ॥ ४ ॥
राजा तान्प्रेषयित्वाथ रात्रौ प्रातस्सभातले ॥
श्रीवेदनिधितीर्थेभ्यस्तन्नाम्ना पत्रिकां ददौ ॥ ५ ॥
अथ पत्रं गृहीत्वा ते गुरोराज्ञानुसारतः ॥
सेतुं गत्वाथ श्रीरंगपट्टणं पुनरागताः ॥ ६ ॥
तत्रैव द्वीपे कावेर्याः कृष्णद्वैपायनास्तदा ॥
चातुर्मास्योपवेशं ते कृत्वा दिनचतुष्टयम् ॥ ७ ॥
जातं ततस्तु पञ्चम्यां स्नात्वा देवार्चनादिकम् ॥
कृत्वोपविष्टास्त्वेतेऽपि लिङ्गाभट्टाग्रहारगाः ॥ ८ ॥
स्नात्वोपविष्टा विप्रांस्तु कृष्णद्वैपायनांन्तिकम् ॥
देवार्थं प्रेषयामासुर्गत्वा ते तान्ययाचिरे ॥ ९ ॥

स्वामिनश्श्रूयतां वेदनिधितीर्थास्समागताः ॥
प्रसन्नविठ्ठलो व्यासश्चिप्पटाख्यश्च तावुभौ ॥ १० ॥
प्रेषणीयौ भवद्भिस्ते संयोज्यास्तपवैरिणा ॥
पुनस्संप्रेपयन्त्येव तदर्थं वयमागताः ॥ ११ ॥
इति तेषां वचश्श्रुत्वा मंञ्जूषां पीठसंस्थिताम् ॥
नयध्वमिति तानूचुस्ते विप्रा निन्युराशु ताम् ॥ १२ ॥
ततस्तीव्रेण देवार्चा कृत्वा तस्माद्विनिर्गताः ॥
गत्वा चन्निगराजाख्यवेलूरं प्रति तत्र ते ॥ १३ ॥
चातुर्मास्यव्रतं कृत्वा पुनस्तस्माद्विनिर्गताः ॥
ततो दिग्विजयं चक्रुस्संचरन्तस्त्वितस्ततः ॥ १४ ॥
कृष्णद्वैपायनाख्यानां शिष्यास्तु तदनन्तरम् ॥
कृत्वा ते कृत्रिमं व्यासं विठ्ठलं च निजे मठे ॥ १५ ॥
वक्तुमारेभिरे व्यासो न दत्तोऽस्मद्गुरूत्तमैः ॥
कृत्रिमः प्रेषित इति जनानां संशयोऽभवत् ॥ १६ ॥
तस्मिन्काले महानासीद्विरोधस्तु परस्परम् ॥
अवधानीनृसिंहार्य–व्यासाचार्याभिधानयोः ॥ १७ ॥
अवधानीनृसिंहार्यश्श्रीविद्यानिधिसन्निधिम् ॥
गत्वा ययाचिरे तांस्ते सन्न्यासो दीयतामिति ॥
श्रुत्वा तेषां वचस्तेऽथ श्रीपादा नोत्तरं ददुः ॥ १८ ॥
तस्माद्विनिर्गतास्तूष्णीं स्वस्थानं ते पुनर्ययुः ॥
व्यासाचार्या अपि तथैवागत्य गुरुशेखरान् ॥ १९ ॥
तुर्यं ययाचिरे तेऽपि तेभ्यस्तुर्याश्रमं ददुः ॥
प्रणवं चोपदिश्याथ तेभ्यस्तु प्रीतिपूर्वकम् ॥ २० ॥
सत्यानन्दाख्यतीर्थोऽयमिति नाम ददुर्मुदा ॥
तां वार्तामथ ते श्रुत्वा नृसिंहाचार्यभूसुराः ॥ २१ ॥
सत्यानन्दद्वेषबुध्या कृष्णद्वैपायनान्ययुः ॥
दत्वा तुर्याश्रमं तेभ्यः कृष्णद्वैपायनास्तदा ॥ २२ ॥

विद्यानाथयतीन्द्रोऽगमिति नाम प्रचक्रिरे ।। २३ ।।
निशम्य वार्तां तां वेदनिधितीर्थगुरूत्तमाः ।।
स्वकीयत्वाभिमानेन चिन्ताक्रान्ता बभूविरे ।। २४ ।।
पण्डिताग्रेसरास्त्वेते परेषां शिष्यतां गताः ।।
तस्मादिमानुपायेन स्वकीयानाचरेत्पुनः ।। २५ ।।
इति संचिन्त्य मनसाऽ लिखंस्तेभ्योऽथ रायसम् ।।
यथा तैर्लिखितं पत्रं तत्क्रमश्च मयोच्यते ।। २६ ।।
भवन्तोऽस्मन्मठे मुख्याः पण्डिताग्रेसराः किल ।।
सन्यासार्थं विरक्त्याऽस्मत्समीपं पूर्वमागताः ।। २७ ।।
तदानीं मनसाऽस्माभिर्निश्चितं स्नहपूर्वकम् ।।
भवद्भ्य एव संस्थानं देयं कालान्तरे खलु ।। २८ ।।
तावद्व[illegible]तिर्भूयादित्यभिप्रायतो वयम् ।।
तूष्णीं स्थित्वा नृसिंहाख्यान् विरक्तान्वीक्ष्य सेवने ।। २९ ।।
दत्तस्तुर्याश्रमोऽस्माभिर्भवद्भिस्तैर्विरोधतः ।।
संस्थानशङ्कया तत्र कृष्णद्वैपायनान्प्रति ।। ३० ।।
गत्वा तुर्याश्रमस्सम्यक् स्वीकृतः कार्य एव सः ।।
कुत्रापि भगवत्पादसेवां कुर्यान्न संशयः ।। ३१ ।।
तत्रैकः प्रोच्यतेऽस्माभिरुपायो भवतः प्रति ।।
वेदव्यासस्तत्र संस्थो यथार्थो वाऽथ कृत्रिमः ।। ३२ ।।
इत्थं विनयतस्सम्यक्कृष्णद्वैपायनान्प्रति ।।
विचारणीयश्चैकान्ते भवद्भिस्स्नेहपूर्वकम् ।। ३३ ।।
अस्तीत्युक्ते स्वीयमठे तत्र स्थेयं न संशयः ।।
नास्तीत्युक्ते विनिर्गत्यागन्तव्यं नात्र संशयः ।। ३४ ।।
दास्यते भवतामेवास्माभिश्शपथपूर्वकम् ।।
संस्थानमत्र युष्माभिर्विश्वासः कार्य एव हि ।। ३५ ।।
इत्थं लिखित्वा चैकान्ते रायसं स्नेहपूर्वकम् ।।
प्रेषयामासुरथ ते तेभ्योऽपृच्छन्रहोऽखिलम् ।। ३६ ।।

नास्तीत्यूचुस्ततस्तेऽपि कृष्णद्वैपायनास्तदा ॥
विनिर्गत्य मठात्तस्माद्विद्यानाथास्सागताः ॥ ३७ ॥
दण्डव्यत्यासमात्रेण शिष्यान्कृत्वा समागतान् ॥
नाम तेभ्यो ददुः प्रीता रङ्गनाथाभिधा इति ॥ ३८ ॥
ततस्संगलगी (सगलगी) ग्रामे रङ्गनाथमुनीश्वरान् ॥
निधाय सचरन्तस्ते पाण्डुरङ्गस्थलं ययुः ॥ ३९ ॥
तदानीं गुरुत्रयाणामन्त्यकाले समागते ॥
समीपस्थाः प्रधानाद्या अपृच्छन्गुरुशेखरान् ॥ ४० ॥
स्वामिभिश्श्रूयतां सम्यगस्मद्वाक्यमितः परम् ॥
संस्थानं भवतां देयं केभ्योऽस्माभिः पुरातनम् ॥
इत्थमुक्तास्ततस्तेभ्यः प्रोचुस्ते गुरुशेखराः ॥ ४१ ॥
कौलगीरघुनाथाख्याचार्याः काशीपुरं गताः ॥
तदागमनपर्यन्तं सत्यव्रतमुनीश्वरान् ॥ ४२ ॥
अस्माभिः प्राग्धर्मपुर्यां स्थापितान्पंण्डितोत्तमान् ॥
आहूय देयं संस्थानं तेभ्य एवास्मदाज्ञया ॥ ४३ ॥
तंरेव रघुनाथाख्याचार्येभ्यो विधिपूर्वकम् ॥
तुर्याश्रमो दापनीयस्संस्थानं च पुरातनम् ॥ ४४ ॥
इत्युक्त्वा गुरुराजास्ते वत्सरे युवसंज्ञके ॥
मासेऽथ कार्तिके शुक्ले पक्षे हरिदिने तदा ॥ ४५ ॥
पाण्डुरंङ्गाभिधे क्षेत्रे त्यक्त्वा देहं परं ययुः ॥

श्रीवेदनिध्याख्यगुरोस्सुरम्यां
कथामिमां यश्शृणुयात्त्रिकाले ॥
स वादिवृन्दान्यखिलानि बुद्ध्या ॥
जित्वाऽऽप्नुयात्कीर्तिमनन्यसाध्याम् ॥ ४६ ॥

**इति श्रीवेणुपल्लो॰वेदनिधितीर्थमहिमवर्णनं नाम**
**॥ षोडशशाखासर्गः ॥**

---

## श्रीसत्यनिधितीर्थगुरुभ्यो नमः

## अथ सप्तदशशाखासर्गः ॥

ततः प्रधानप्रमुखास्सर्वे संस्थानसंयुताः ॥
विजयापुरमाजग्मुस्सांबाजिसदनं प्रति ॥ १ ॥
सांबाजिपंतस्संस्थानसहितं देवमागतम् ॥
ररक्ष ब्राह्मणांश्चापि सेवाजनसमन्वितः ॥ २ ॥
ततस्समाव्हयामास सत्यव्रतमुनीश्वरान् ॥
आगतास्तेऽतितीव्रेण विजयाख्यपुरीं (पुरं) प्रति ॥ ३ ॥
तां वार्तां स्वजनैश्श्रुत्वा कृष्णद्वैपायना अपि ॥
समीपस्थास्समाजग्मुस्संस्थानाक्रमणेच्छया ॥ ४ ॥
कृष्णद्वैपायनान्केचित्केचित्सत्यव्रतानपि ॥
संस्थानार्हान्जगुस्तत्र गुर्वाज्ञा प्रबलाऽभवत् ॥ ५ ॥
गुरोराज्ञां पुरस्कृत्य सत्यव्रतगुरूत्तमाः ॥
कृष्णद्वैपायनानुज्ञां गृहीत्वाऽखिलसम्मताः ॥ ६ ॥
देवार्चनं ततः कृत्वा तीर्थमुद्रादिकानपि ॥
दत्वा भुक्त्वा सभामध्ये सूपविष्टा वरासने ॥ ७ ॥
श्रीवेदनिधितीर्थानां करकञ्जसमुद्भवाः ॥
सत्यव्रताः इति तदा गायकैस्समघोषयन् ॥ ८ ॥
ततस्तस्माद्विनिर्गत्य संचरन्तस्त्वितस्ततः ॥
कृष्णातीरं समागत्य सत्यप्रज्ञं करोद्भवम् ॥ ९ ॥
कृत्वा तथाऽणुसंस्थानं ददुस्ते कतिचिद्दिनैः ॥
गुरूणां पुरतो देहं त्यक्त्वा हरिपुरं ययुः ॥ १० ॥
कौलगीरघुनाथार्यास्ततः काश्यास्समागताः ॥
तेभ्यो ददुस्ते सन्न्यासं संस्थानमभिषिच्य च ॥ ११ ॥
ततस्तेभ्यो ददुस्सत्यनिधितीर्थगुरूत्तमाः
इति नाम परं प्रीतास्सत्यव्रतगुरूत्तमाः ॥ १२ ॥

तेभ्यो दत्वा वंशरामं वेदव्यासं तृतीयकम् ॥
विभवैः प्रेषयाभासुस्तदा कर्नाटकं प्रति ॥ १३ ॥
पूर्वं यथा वेदनिधिश्रीपादाश्चोलमण्डलम् ॥
गत्वा दिग्विजयं चक्रुस्तथैवैतेऽपि चक्रिरे ॥ १४ ॥
सत्यव्रतस्वामिनस्तु गत्वा श्रीरङ्गपट्टणम् ॥
देशे देशे संचरन्तः पुनस्संगलगीं ययुः ॥ १५ ॥
ततस्तेऽप्यागताश्शीघ्रं श्रीसत्यनिधिसंज्ञकाः ॥
सत्यव्रतास्तदा तेभ्यो महासंस्थानमार्पयन् ॥ १६ ॥

सत्यव्रतश्रीगुरुराजवर्या–
स्सुस्वस्थचित्ता बहुधान्यवर्षे ॥
तपस्यमासाद्यदलस्यषष्ठ्यां
त्यक्त्वा तनुं श्रीहरिलोकमापुः ॥ १७ ॥

सां(सं)गलिग्यां ततस्सत्यनिधितीर्थगुरूत्तमाः ॥
स्थित्वा संस्थानदानार्थं मनसा समचिन्तयन् ॥ १८ ॥
ततस्सत्यानन्दतीर्थान्वेदनिध्यार्यहस्तजान् ॥
तान्समाहूय श्रीपादाश्श्रीसत्यनिधिसंज्ञकाः ॥ १९ ॥
कृत्वाऽथ दण्डव्यत्यासं पाण्डित्यबलमीक्ष्य ते ॥
अभिषिच्याणुसंस्थानं ददुस्तेभ्यो मुदान्विताः ॥ २० ॥
ततो गुणनिधिभ्योऽपि ददुस्सन्न्यासमादरात् ॥
अग्रे तेभ्योऽणुसंस्थानमेतेभ्यो दापनेच्छया ॥ २१ ॥
ततः कालांन्तरे तेऽथ सत्यानन्दमुनीश्वराः ॥
भुवि देहं परित्यज्य जग्मुर्हरिपद परम् ॥ २२ ॥
अथ स्वयं गुणनिधितीर्थेभ्यो गुरुरा(युवरा)ट्पदम् ॥
अभिषिच्य ददुः प्रीताश्श्रीसत्यनिधिसंज्ञकाः ॥ २३ ॥
ततस्तेऽप्यणुसंस्थानसंयुताः पंठणादिषु ॥
कृत्वा दिग्विजयं पश्चात्परलोकमितो गताः ॥ २४ ॥
ततः पुरातनान्कृत्वा द्वैपायनकरोद्भवान् ॥
विद्यानाथाभिधान्पूर्वं सत्यव्रतमुनीश्वरैः ॥
(पूर्वं श्रीवेदनिधिसंज्ञकैः) ॥ २५

दण्डव्यत्यासतो रङ्गनाथतीर्थ इतीरितान् ॥
सर्वांलिग्यां स्थापितांस्तान् समाहूय गुरूत्तमाः ॥ २६ ॥
सत्यनिध्याख्यश्रीपादाः परीक्षार्थं सभातले ॥
सर्वान्समाव्हयामासुस्स्वीयहस्ताब्जसंभवान् ॥ २७ ॥
कल्परीरामचन्द्राख्यतीर्थास्तत्र समागताः ॥
लक्ष्मीकान्तमुनीन्द्राख्यतीर्थावपि समागतौ ॥ २८ ॥
व्यासतीर्थां मणिग्रामाच्छ्रीपादान्तिकमागताः ॥
तेषां मध्ये रङ्गनाथतीर्थाश्श्रेष्ठतमास्तदा ॥ २९ ॥
तेषां वाग्व्यवहारेण सभास्था विस्मितास्तदा ॥
श्रीपादाः परमप्रीता अणुसंस्थानमार्पयन् ॥ ३० ॥
व्यत्यासं दण्डयोः कृत्वाऽभिषिच्य परमादरात् ॥
अघोषयन्सत्यनाथश्रीपादा इति गायकैः ॥ ३१ ॥
वंशरामं ततो दत्वा वेदव्यासं तृतीयकम् ॥
श्रीभाग्यनगरप्रान्तं प्रेषयामासुराशु तान् ॥ ३२ ॥
तेषामनुगतान्व्यासतीर्थानपि विधाय ते ॥
प्रसन्नविठ्ठलं व्यासं चिप्पटाख्यं ससाधनम् ॥ ३३ ॥
दत्वा वाहनवाद्यादीन्सत्यनाथान्यथा तथा ॥
इमानाज्ञापयंस्ते तु विजयाख्यपुरं प्रति ॥ ३४ ॥
ततस्संगलगीं त्यक्त्वा महासंस्थानसंयुताः ॥
सत्यनिध्याख्यश्रीपादास्तीर्थयात्राप्रसंगतः ॥ ३५ ॥
कृष्णाभीमरथीतुंङ्गभद्रातीरनिवासिनाम् ॥
प्राचीनगुरुवर्याणां गत्वा वृन्दावनानि ते ॥ ३६ ॥
गुरौ सिंहगते धर्मपुर्यां गोदावरीं प्रति ॥
गत्वा स्नात्वाऽथ चिंचोलीं जग्मुश्श्रीपादशेखराः ॥ ३७ ॥
कृष्णद्वैपायनैस्तत्र स्नेहं संगाद्य युक्तितः ॥
निवृत्तिसंगमं प्रापुरन्तकाले समागते ॥ ३८ ॥
शार्वर्यब्दे मार्गशीर्षमासे पक्षे सिताभिधे ॥
दशम्यां सत्यनिध्याख्यतीर्था हरिपदं ययुः ॥ ३९ ॥

सत्यव्रत–सत्यनिधीनां
भक्त्या योऽनुवर्णयेच्चरितम् ॥
स भवति धनधान्ययुतो
भक्तिं लभते च केशवेऽतितराम् ॥ ४० ॥

**इति श्रीवेणु०सत्यव्रतसत्यनिधितीर्थयोर्महिमवर्णनं नाम**
**॥ सप्तदशशाखासर्गः ॥**

## श्रीसत्यनाथतीर्थगुरुभ्यो नमः

## अष्टादशशाखासर्गः

श्रीसत्यनाथश्रीपादास्ततस्तस्माद्विनिर्गताः ॥
निवृत्तिसंगमं प्राप्य व्यासतीर्थान्समाह्वयन् ॥ १ ॥
प्रसन्नं विठ्ठलं तेभ्यो दत्वा व्यासं च चिप्पटम् ॥
पदार्थान्पुस्तकमुखांस्ततस्संगलिगीं प्रति ॥ २ ॥
तान्प्रेषयित्वा श्रीपादास्स्वयं तस्माद्विनिर्गताः ॥
गत्वा कर्नाटकं चंदी तंजा(चंदा)वरगुरादिषु ॥ ३ ॥
तत्रत्यवादिवृन्दानि जित्वा जित्वा गुरूत्तमाः ॥
ततस्संगलगीमेत्य सत्रं तद्देवतार्चनम् ॥ ४ ॥
मेलयित्वा पूजयित्वा संचरन्तस्त्वितस्ततः ॥
चक्रिरे ते दिग्विजयं कृष्णद्वैपायनास्तदा ॥ ५ ॥
एतेभ्यः पत्रमलिखन्गङ्गायात्रां चिकीर्षवः ॥
गमिष्यामो वयं तस्मादस्मदीयां तु पत्रिकाम् ॥ ६ ॥
विलोक्यागम्यतां शीघ्रं भवद्भ्यः प्रीतिपूर्वकम् ॥
प्रसन्नविठ्ठलं व्यासं चिप्पटाख्यं पुरातनम् ॥ ७ ॥
अस्मदीयं च सस्थानं पदार्थान्निखिलानपि ॥
दास्यामहे वयं नो चेदन्यस्मै दद्महे ध्रुवम् ॥ ८ ॥
एवं लिखित्वा पत्रं तैः प्रेषितं ते विलोक्य च ॥
कृष्णद्वैपायना यत्र जग्मुस्तत्रातिशीघ्रतः ॥ ९ ॥

विजयाख्यपुरं प्राप्य चतुर्भिर्दिवसैस्ततः ॥
कृष्णद्वैपायनान्नेमुर्मानयन्तः पुनः पुनः ॥ १० ॥
अथ तेऽप्यतिहर्षेण सत्यनाथयतीश्वरान् ॥
मानयित्वा स्वसंस्थानं सत्रं तेभ्यो ददुर्मुदा ॥ ११ ॥
प्रसन्नविठ्ठलं व्यासमुभयं कृत्रिमं तथाः ।
श्रीसत्यनाथतीर्थेभ्यो दत्वा प्रोचुर्विमत्सराः ॥ १२ ॥
व्यासोऽयं कल्पितोऽस्माभिर्देवद्रोहस्समागतः ॥
तद्दोषपरिहारार्थं पीठे तत्संयुतं पृथक् ॥ १३ ॥
स्थापयित्वाऽभिषिच्यामुं पूजयित्वा सभातले ॥
अस्माभिः कल्पित इति भवद्भिः प्रोच्यतां सदा ॥ १४ ॥
इत्थमुक्त्वा ततस्तेभ्योऽनुज्ञां दत्वाऽतिनिस्स्पृहाः ॥
कृष्णद्वैपायनास्तस्माद्गङ्गायात्रामनोरथाः ॥ १५ ॥
गत्वा भीमरथीतीरं कुसुमुक्त्या(मत्या)ख्यखेटके ॥
कीलकज्येष्ठपौर्णम्यां जग्मुस्ते परमं पदम् ॥ १६ ॥
कृष्णद्वैपायनाख्येषु दत्वाऽनुज्ञां गतेष्वथ ॥
श्रीसत्यनाथश्रीपादा विजयाख्यपुरे तदा ॥ १७ ॥
भिषग्रुग्माभिधायाथ प्रसन्नाभिधविठ्ठलम् ॥
ददुस्तेनार्थितास्तस्मै कृष्णद्वैपायनैः कृतम् ॥ १८ ॥
ततः कृष्णातुंङ्गभद्रामध्यदेशे मनोहरे ॥
नानाविधांश्च कलहानगणय्य गुरूत्तमाः ॥ १९ ॥
चतुर्विधैरुपायैस्ते तत्रत्यान्स्ववशे स्थितान् ॥
कृत्वा दिग्विजयं चक्रुर्विद्वन्निकरसेविताः ॥ २० ॥
ततस्संगलगीं गत्वा सत्यनाथगुरूत्तमाः ॥
अत्यार्षिनरसिंहाख्याचार्येभ्यः प्रीतिपूर्वकम् ॥ २१ ॥
दत्वा तुर्याश्रमं सम्यगभिषिच्य गुरोः पदे ॥
सत्याभिनवतीर्थोऽयमिति नाम ददुस्तदा ॥ २२ ॥
वंशरामं ततो दत्वा तृतीयं सिकतामयम् ॥
वेदव्यासं पूजनार्थं पदार्थान्वाहनादिकान् ॥ २३ ॥

प्राचीदेशे दिग्विजयं कर्तुं तान्गुरुशेखराः ॥
प्रेषयामासुरथ ते जग्मुर्दिग्विजयेच्छया ॥ २४ ॥
श्रीभाग्यनगरं गत्वा कवितार्किकपूर्वकान् ।
जित्वा वादिगणानन्यान्गत्वाऽथो सप्तसागरम् ॥ २५ ॥
तत्र स्थितान्वादिवरान्जित्वा जित्वा पुनः पुनः ॥
वेणासागरमभ्येत्य स्नानार्थमगमस्तदा ॥ २६ ॥
तदानीं भगवांस्तेषु दयां कुर्वन्स्वयं हरिः ॥
वृद्धब्राह्मणरूपेणाभ्येत्य श्रीगुरुराट्करम् ॥ २७ ॥
प्रगृह्य दर्शयित्वाऽब्धिं तेभ्यस्संकल्पपूर्वकम् ॥
कारयित्वा जले स्नानमंन्तर्धानमतोऽ(मथोऽ)गमत् ॥ २८ ॥
महाश्चर्ययुतास्सर्वे श्रीपादेषु दयां हरेः ॥
सत्याभिनवतीर्थास्ते प्रशशंसुः क्षणे क्षणे ॥ २९ ॥
ततस्तस्माद्विनिर्गत्य सप्तसागरमेत्य ते ॥
वशिष्ठसागरं प्राप्य तत्समीपे गुरूत्तमाः ॥ ३० ॥
यस्मिन्विद्याधीशतीर्थैः पूर्वं क्षारोदभूतलात ॥
निर्मितं स्वादुपानीयं तच्च कालान्तरे गतम् ॥ ३१ ॥
एतेऽपि तत्रैवागत्य लोकानां हितकाम्यया ॥
तदा निर्मिमिरे स्वादूदकमात्मतपोबलात ॥ ३२ ॥
निर्मितास्तत्र चत्वारः कूपास्तेषामनुज्ञया ॥
सेवकैस्तेऽद्यापि सन्ति स्वादूदकसमन्विताः ॥ ३३ ॥
ततो धर्मपुरीं प्राप्य गोदास्नानं विधाय च ॥
गुरूणां दर्शनार्थाय पुनस्संगलगीं ययुः ॥ ३४ ॥
सत्यनाथमुनीन्द्रैस्ते सह तस्माद्विनिर्गताः ॥
निवृत्तिसंगमे चक्रुश्चातुर्मास्योपवेशनम् ॥ ३५ ॥
ततस्तस्माद्विनिर्गत्य मिलित्वैव गुरूत्तमाः ॥
श्रीवेंङ्कटाधीशया(वेङ्कटपतेर्या)त्रां कृत्वा तस्माद्विनिर्गताः ॥३६॥
श्रीसत्यनाथश्रीपादास्सत्याभिनयसंयुताः ॥
इतस्ततस्संचरन्तः क्रमाज्जग्मुः पिनाकिनीम् ॥ ३७ ॥

वीरचोलपुरे तत्र प्रमाद्याव्हयवत्सरे ॥
मार्गशुक्ले हरिदिने सत्यनाथमुनीश्वराः ॥ ३८ ॥
सत्याभिनवतीर्थेभ्यस्सर्वं तद्देवतार्चनम् ॥
दत्वा देहं परित्यज्य वैकुण्ठनगरीं ययुः ॥ ३९ ॥
सत्यनाथतीर्थराजसद्गुणानुकीर्तनं
यः करोति नित्यमादरेण भक्तिसंयुतः ॥
तस्य सद्गुरुप्रसादसिद्धिरुत्तमा भवे–
च्छत्रवोऽपि मित्रतां व्रजन्ति तत्प्रसादतः ॥ ४० ॥

**इति श्रीवेणु०सत्यनाथतीर्थमहिवर्णनं नाम**
**॥ अष्टादशशाखासर्गः ॥**

---

## श्रीसत्याधीशतीर्थगुरुभ्यौ नमः ॥

## ॥ एकोनविंशशाखासर्गः ॥

सत्याभिनवतीर्थास्ते महासन्न्याससंयुताः ॥
चक्रुस्संस्थानमर्यादां राजनीतिसमन्विताम् ॥ १ ॥
विप्रांस्ते षष्टिसंख्याकांश्चक्रुस्सेवाजनांस्तदा ॥
तत्र वेंकटपत्याख्याचार्यान्मन्त्रिवरांस्तथा ॥ २ ॥
ततस्ते देवपूजायां वामदक्षिणसेवकौ ॥
देवसेवाजनान्सेनापतिं च द्वारपालकान् ॥ ३ ॥
भूसुरान्मार्जनाद्यर्थं पाचकान्परिवेषकान् ॥
पदार्थान् विविधान्देवपूजासाधनपूर्वकान् ॥ ४ ॥
महान्त्यमित(महान्त्यत्यन्त)मौल्यानि वस्त्रालङ्करणानि च ॥
स्वर्ण–रौप्यघटादीनि सर्वोपस्करणानि च ॥ ५ ॥
छत्रचामरपीठादीन्स्वर्णरत्नमयांस्तथा ॥
सर्वदा देवसान्निध्ये घृतदीपार्तिकादिकान् ॥ ६ ॥
पात्राणि पाकयोग्यानि स्थूलानि विविधानि च ॥
तथा शय्यासनादीनि वस्त्राणि विविधानि च ॥ ७ ॥

अश्वांश्च वृषभान्गाश्च तथा तत्पालकानपि ॥
एवं क्रमेण चक्रुस्ते श्रीपादास्सर्वसाधनम् ॥ ८ ॥
अमन्त्रणोत्सवं प्रातस्ततश्श्रीपादुकार्चनम् ॥
घटीविज्ञापनं काले काले स्नान ततः परम् ॥ ९ ॥
जपो व्याख्याप्रवृत्तिश्च निर्माल्यस्य विसर्जनम् ॥
नवरत्नाभिषेकश्च क्षीरैः कूर्माभिषेचनम् ॥ १० ॥
देवतार्चनकाले तु वेदपारायणं तथा ॥
सप्तमालार्पणं नित्यं पूजाकाले जगत्पतेः ॥ ११ ॥
महाण्वलङ्कारसंज्ञनैवेद्यानां समर्पणम् ॥
तस्मिन्काले जवनिकां क्षौमांम्बरविनिर्मिताम् ॥ १२ ॥
सुवर्णवाटिकासंस्थशर्करादिसमर्पणम् ॥
फलपानीय–ताम्बूलमुखानेकसमर्पणम् ॥ १३ ॥
लोकेभ्यो मूलरघुपवेदव्यासप्रदर्शनम् ॥
पूजान्ते व्यासपूर्वाणां कनकैरभिषेचनम् ॥ १४ ॥
गन्धप्रदानं विदुषां स्वयम्पाकविवर्जनम् ॥
स्वभोज्यदानं मुख्यानां मध्यस्थानां मनीषिणाम् ॥ १५ ॥
महानैवेद्यमुद्धृत्य तदीयपरिवेषणम् ॥
सायंकाले स्वर्णमयीं दोलां बध्वाऽर्चनं हरेः ॥ १६ ॥
गीत–वादित्र–नृत्तैश्च वेणुवादनपूर्वकैः ॥
सभायामुपविश्याथ वामसेवाद्विजोत्तमैः ॥ १७ ॥
वाचयित्वा गुरुस्तोत्रं विद्वत्पूर्वेभ्य एव च ॥
दत्वा मन्त्राक्षतान्मालां ततो विश्रम्यतामिति ॥ १८ ॥
दत्वाऽनुज्ञां समस्तेभ्यश्शय्यायामुपविश्य च ॥
आयव्ययादिश्रवणं प्रधानाद्यैस्समस्तशः ॥ १९ ॥
एवमादि सदा कुर्यादिति ते गुरुशेखराः
स्वयं विधाय मर्यादां स्ववंशेभ्योऽप्यदर्शयन् ॥ २१ ॥
ततो गरुडसेवार्थं काञ्चीं जग्मुर्गुरूत्तमाः ॥
तत्र योगीन्द्रतीर्थैस्तु विवादस्समभूत्तदा ॥ २० ॥

वेङ्कटाद्रिं ततो गत्वा कण्टकद्वारमेत्य ते ॥
मध्यद्वीपं समागत्य जग्मुस्संगलिगीं प्रति ॥ २२ ॥
ततो वड्डीजगन्नाथाचार्येभ्यः प्रीतिपूर्वकम् ॥
दत्वा सन्न्यासमथ ते तेभ्यश्श्रीगुरुशेखराः ॥ २३ ॥
प्रणवं चोपदिश्याथाभिषिच्य गुरुराट्पदे ॥
सत्याधीशाख्यतीर्थोऽयमिति नाम ददुस्तदा ॥ २४ ॥
ततो दिग्विजयार्थं तान्प्रेषयित्वा गुरूत्तमाः ॥
नाचारपुर्यामूषुस्ते वातरोगप्रपीडिताः ॥ २५ ॥
तत्रैव कतिचित्कालमुषित्वौषधसेवनात् ॥
गुरुप्रसादबलतश्शान्तरोगास्तदाऽभवन् ॥ २६ ॥
योगीन्द्रेषु भुवं त्यक्त्वा परलोकं गतेष्वथ ॥
तच्छिष्येषु सुरेन्द्रेष्वप्यन्येभ्यस्स्वपदं परम् ॥ २७ ॥
अदत्वा परमं लोकं गतेषु तदनन्तरम् ॥
तन्मठीया मुख्यशिष्याः कुम्भकोणनिवासिनः ॥ २८ ॥
मठभेदोत्थकलहशान्त्यर्थं कुशलास्तदा ॥
तदीयदेवपिठरमानीय मठगैर्द्विजैः ॥ २९ ॥
प्रातरुत्थाय चागत्य नाचाराख्यपुरं प्रति ॥
सत्याभिनवतीर्थानामग्रे न्यस्य बभाषिरे ॥ ३० ॥
दयालव इति श्रुत्वा भवन्तो वयमागताः ॥
अद्य विज्ञाप्यतेऽस्माभिर्भवद्भिश्श्रूयतां वचः ॥ ३१ ॥
सुरेन्द्रस्वामिनोऽस्माकमन्येभ्यस्स्वपदं स्वयम् ॥
अदत्वा परलोकं ते गताश्शीघ्रं यदृच्छया ॥ ३२ ॥
स्वाम्यभावान्मठेऽस्माकं देवमानीय सत्वरम् ॥
वयं समागताश्श्रीमत्पादच्छायाश्रयेच्छया ॥ ३३ ॥
पूजाकाले देव एष मिलित्वैव प्रपूज्यताम् ॥
वयं च भवतामेव शिष्यास्स्यामो न संशयः ॥ ३४ ॥
इति तेषां वचश्श्रुत्वा तदानीं गुरुशेखराः ॥
मनसा चिन्तयामासुर्दृशं दूरे निधाय च ॥ ३५ ॥

एतेषां वचसा मूर्तिर्यदि स्वीक्रियते त्वियम् ॥
अस्माभिस्तु तदा लोकास्संशयं कुर्युरञ्जसा ॥ ३६ ॥
प्रायस्त्वेषां मठे मूलरामो नैव स्थितः पुरा ॥
तेनैतेऽन्यमठस्थं तमङ्गीचक्रुश्च पूजने ॥ ३७ ॥
एवं लोकापवादोऽस्मास्वागच्छेदेव निश्चयः ॥
तस्मान्न ग्राह्यमस्माभिस्तदीयं देवतार्चनम् ॥ ३८ ॥
यद्यङ्गीक्रियतेऽस्माभिस्तदा मूर्तिमिमां वयम् ॥
क्व न्यस्य पूजयामोऽस्मान्नाङ्गीकुर्मस्तदर्चनम् ॥ ३९ ॥
इत्यालोच्याथ तानूचुश्श्रीपादास्ते विचक्षणाः ॥
मठं न लोपयेदापत्कालेऽपि स्ववशे सति ॥ ४० ॥
तस्माद्यूयममुं देवं गृहीत्वा स्वस्थलं प्रति ॥
गत्वा षष्ठिकुलोद्भूतं विद्वांसं पश्यताशु वै ॥ ४१ ॥
ततो वयं समागत्य तस्मै तुर्याश्रमं परम् ॥
दास्यामस्तेन लोकेऽस्मिन्नागच्छेत्कीर्तिरुत्तमा ॥ ४२ ॥
इत्युक्त्वा तान्प्रेषयित्वा प्रोक्तवत्तैः कृते सति ॥
सत्याभिनवतीर्थास्तां कुम्भघोणां ययुर्मुदा ॥ ४३ ॥
पुट्टाचार्याभिधस्तत्र विद्वान् षष्ठिकुलोद्भवः ॥
तदा लक्ष्यीकृतस्तैस्ते चक्रुस्सन्न्यासिनं मतम् ॥ ४४ ॥
प्रणवं चोपदिश्याथ सभायामभिषिच्य तम् ॥
सुमतीन्द्रोऽयमित्येवं तस्मै नाम ददुस्तदा ॥ ४५ ॥
सत्याभिनवतीर्थानां पिता यतिरभूत्पुरा ॥
नाम्ना स सुमतिस्तस्मात्तन्नाम्नेन्द्रममुं जगुः ॥ ४६ ॥
सत्याभिनवतीर्थैस्ते सुमतीन्द्रमुनीश्वराः ॥
संस्थानमाप्य स्वमठे श्रीपादा अभवंस्तदा ॥ ४७ ॥
अनुज्ञातास्ततस्तैस्ते सत्याधीशमुनीश्वराः ॥
पूर्वदेशे संचरन्तश्चक्रुर्दिग्विजयं तदा ॥ ४८ ॥
ततश्चतुर्विधोपायैस्संपाद्य विपुलं धनम् ॥
पुनर्गुरुपदाम्भोजदर्शनार्थं समागताः ॥ ४९ ॥

नाचारपुरमागत्य प्रणम्य गुरुशेखरान् ॥
चत्वारिंशत्सहस्राणि सूकरणां समार्पयन् ॥ ५० ॥
नानाविधपदार्थांस्ते वस्त्राभरणपूर्वकान् ॥
सत्याधीशैस्समानीतान्दृष्ट्वा तुष्टिं प्रपेदिरे ॥ ५१ ॥
तान्पदार्थानथ मठे स्थापयित्वा गुरूत्तमाः ॥
वित्तरूपं तदखिलं ब्राह्मणेभ्यो ददुर्मुदा ॥ ५२ ॥
सत्याधीशस्वामिनोऽथ तेषां छायानुवर्तिनः ॥
भूत्वा पुनःपुनर्गत्वा चक्रुर्दिग्विजयं भुवि ॥ ५३ ॥
नानाविधपदार्थांस्ते संपाद्य च पुनः पुनः ॥
सत्याभिनवतीर्थेभ्यो ददुरानीय सर्वशः ॥ ५४ ॥
सत्याधीशयतीन्प्रीत्या ततः पूर्वदिशं प्रति ॥
गुरवः प्रेषयामासुर्गतास्तेऽप्यतिहर्षिताः ॥ ५५ ॥
नानादेशगतैस्सम्यक् पूजिताः पार्थिवादिभिः ॥
सप्तगोदावरीतीरं प्राप्तास्ते रोगपीडिताः ॥ ५६ ॥
ततो राजमहेन्द्राख्यपुरं प्राप्ता गुरूत्तमाः ॥
ज्ञात्वा शरीरप्रकृतिं पराधीनमतीव ते ॥ ५७ ॥
अन्तकाले समायाते तदा विज्ञप्तिपत्रिकाम् ॥
लेखयित्वाऽणुसंस्थानं पदार्थान् विविधांस्तथा ॥ ५८ ॥
संपदितपदार्थानप्यखिलं देवतार्चनम् ॥
प्रेषयित्वा गुरूणां च समीपं तत्ततः परम् ॥ ५९ ॥
आषाढदर्शे स्नात्वाऽथ जप्त्वा ते प्रणवादिकान् ॥
सन्नियम्येन्द्रियग्रामं परं हरिपदं ययुः ॥ ६० ॥
ततोऽणुसंस्थानसंस्थपदार्थान्परिगृह्य ते ॥
ब्राह्मणाः पुनरागत्य श्रीपादेभ्यस्समार्पयन् ॥ ६१ ॥
सत्याभिनवतीर्थास्तु सत्याधीशमुनीश्वरान् ॥
परलोकगताञ्श्रुत्वा परां चिन्तां प्रपेदिरे ॥ ६२ ॥
सत्याधीशस्वाम्याचरितां गुरुपदभक्तिं यः कथयति सः ॥
भक्तिश्रद्धाभ्यां भरितस्सन्हरिगुरुसेवानिरन्तरो हि भवेत् ॥ ६३ ॥

इति श्रीवेणुपल्ली०श्रीसत्याधीशतीर्थमहिमवर्णनं नाम
॥ एकोनविंशशाखासर्गः ॥

---

श्रीसत्याभिनवतीर्थगुरुभ्यो नमः ॥
॥ विंशश्शाखासर्गः ॥

ततो गोदावरीयात्रां कर्तुकामा गुरूत्तमाः ॥
इतस्ततस्संचरन्तश्श्रीभाग्यनगरान्तिके ॥ १ ॥
एकस्मिन्खेटमध्ये ते महासंस्थानसंयुताः ॥
ऊषुस्तत्रागताश्चोराश्श्रीपादानां मठं प्रति ॥ २ ॥
रुध्वा गृहं पाटयित्वा कवाटं सुदृढं तथा ॥
प्रविश्यान्तर्दीपयुता (दीपहस्ता) श्चक्रुरन्वेषणं बहु (बलात्) ॥ ३ ॥
स्वर्णरूप्यात्मकधिया ताम्रोपकरणान्विताम् ॥
ऊर्णाम्बरधिया ग्रन्थि काषायाम्बरसंयुताम् ॥ ४ ॥
सुकाषाय (मनःशिला) शिलाभारं ददृशुर्वित्तवद्धिया ॥
तत्र केचिद्गृहीत्वा (तत्र केचन) तान्भारान् जग्मुस्सुशीघ्रगाः
(गृहीत्वा जग्मुराशुगाः) ॥ ५ ॥
अपरे नायकोपेतास्तस्मिन्नेव गृहे स्थिताः ॥
विविधोपद्रवैः क्रूराश्श्रीपादान्समबाधयन् ॥ ६ ॥
द्रव्यार्थं पीडितास्तैर्निशि रक्षकवर्जिताः ॥
समाहूय मठीयान्स्वानानाय्याभरणादिकान् ॥ ७ ॥
कटिकर्णाङ्गुलिस्थानि महामौल्ययुतान्यपि ॥
श्रीपादार्थ (स्वपदार्थान्) ददुस्तेभ्यो मठीयास्सत्वरं द्विजाः ॥ ८ ॥
तदानीमपतन्बाणाश्चोरोपरि यदृच्छया ॥
हित्वा ते निर्ययुर्भीतास्तस्माद्योद्धृविवर्जितात् ॥ ९ ॥
(द्योध्दृज्झितादगृहात्) ॥
ततः परस्मिन् दिवसे श्रीपादा देवतार्चनम् ॥ १० ॥
स्वर्णरौप्योपकरणैश्चक्रुस्स्थानान्तरं गताः ॥
ततो मठीयैर्दत्तानां भूषणानां गुरूत्तमाः ॥ ११ ॥

मौल्यानि तेभ्यः प्रददुस्सर्वेभ्योऽ ब्ध्यब्धिसूकरान् ॥
स गत्वा स्वस्थलं चोरनायकस्स्वपुरोऽखिलम् ॥ १२ ॥
मनश्शिलाशिलाराशिं काषायवसनानि च ॥
तथा ताम्रोपकरणं दृष्ट्वाऽऽश्चर्यसमन्वितः ॥ १३ ॥
खिन्नो भूत्वा यथापूर्वं बध्वा तैस्स्थापितं मठे ॥
तथैव बध्वा तत्सर्वं निधाय वृषभोपरि ॥ १४ ॥
पुनस्संप्रेषयामास श्रीपादेभ्यस्स्वसेवकैः ॥
ब्राह्मणानां पदार्थांश्च प्रेषयित्वाऽ खिलांस्तदा ॥ १५ ॥
स्वीयं दीपाराधनार्थं ग्राममेकं ददौ मुदा ॥
ततस्सिंहस्थिते जीवे गत्वा गोदावरीतटम् ॥ १६ ॥
तस्यां स्नानादिकं कृत्वा चातुर्मास्योपवेशनम् ॥
विधाय तस्मान्निर्गत्य जीवे कन्यागते सति ॥ १७ ॥
कृष्णातीरं समागत्य कोल्पुरे गुरुशेखराः ॥
स्थित्वा स्नानादिकं चक्रुर्नित्यं सर्वजनैस्सह ॥ १८ ॥
आतिथ्यं चक्रिरे तेषां तत्र केचन नित्यशः ॥
एकस्मिन् दिवसे तत्र वेंकण्णा (वेंकटा) ह्वयभूसुरः ॥ १९ ॥
तेभ्यो विज्ञापनं चक्रे भिक्षार्थमखिलैस्सह ॥
तत्र गत्वा देवतार्चां चक्रुस्ते गुरुशेखराः ॥ २० ॥
गृहस्य दक्षिणे भागे सभास्थानेऽतिशोभने ॥
तदानीं प्रथमं धूपार्तिक्यार्पणमभूत्ततः ॥ २१ ॥
नैवेद्यसमये सर्वान्बहिर्निष्कास्य तत्रगान् ॥
सभास्थिताणुद्वाराणि पिधाय निखिलन्यपि ॥ २२ ॥
महाद्वारं पिधायांन्तर्नैवेद्यस्य समर्पणे ॥
कृते श्रीपादप्रवरैर्जपकाले समागते ॥ २३ ॥
अन्तर्देवसमीपे तु वामदक्षिणसेवकौ ॥
श्रीपादा गायका देवसेवका वेंदपाठकाः ॥ २४ ॥
एवमेते गृहान्तस्स्थास्सर्वेप्युत्तरगा बहिः ॥
गृहसंबन्धिनस्सर्वे प्रधानाश्च गृहे स्थिताः ॥ २५ ॥

तदानीं दैवयोगात्तु महानग्निर्विवेश ह ॥
तद्गृहं परितो दग्धुमारभत्सहसाऽऽह्नि ॥ २६ ॥
तं दृष्ट्वा(तद्दृष्ट्वा) प्रथमं विद्याधीशाचार्यास्समागताः ॥
परितो धावमानास्ते लोकानाहूय सर्वशः ॥ २७ ॥
उच्चैरार्तध्वनिं चक्रुर्महाद्वारसमीपगाः ॥
तच्छ्रुत्वा द्वारपालास्तु समुद्धाटय कवाटकम् ॥ २८ ॥
आव्हयामासुराचार्यान्वन्हिर्व्यक्तो बभूव ह ॥
तृणगेहं तत्समन्ताद्वन्हिर्व्याप्तो बभूव ह ॥ २९ ॥
श्रीपादास्तीव्रतः पञ्चप्रतिमास्संपुटं तथा ॥
निक्षिप्यं पेटयां ते तस्थुर्वामदक्षिणसेवकैः (कौ) ॥ ३० ॥
मिलित्वा सर्वमादाय श्रीपादैस्सह निर्गताः ॥
सर्वे समीपस्थजनाः पदार्थान् विविधांस्तदा ॥ ३१ ॥
गृहीत्वाऽङ्गणगा यत्र श्रीपादा देवसंयुताः ॥
सर्वेषामभवत्क्षेमं तदा वन्हिभयादहो ॥ ३२ ॥
गुरुप्रसादाच्छ्रीपादाश्चोरवन्हिभयाच्च्युताः ॥
श्रीपादेभ्यो ददौ भिक्षां यजमानस्स्थलान्तरे ॥ ३३ ॥
ब्राह्मणेभ्यो ददुर्वित्तं श्रीपादाः क्षेमकारणात् ॥

अभिनवमुनिवर्यसद्गुरूणां
वरचरितं भुवि वर्णितुं क्षमः कः ॥
रघुकुलतिलको भयादरक्षत्
खरचोरेषु शरांस्तदा विमुञ्चन् ॥ ४४ ॥

**इति श्रीमद्वेणुपल्लो०सत्याभिनवतीर्थचरिते**
चोराग्निभयपरिहार(प्रकार)कथनं नाम
**॥ विंशश्शाखासर्गः ॥**

---

## अथैकविंशः शाखासर्गः

अथ तस्माद्विनिर्गत्यागत्य भीमरथीतटम् ॥
पाण्डुरङ्गक्षेत्रयात्रां कृत्वा सम्यक्ततः परम् ॥ १ ॥
तुङ्गभद्रा-कृष्णवेणीमध्यदेशे गुरूत्तमाः ॥
चक्रुर्दिग्विजयं नित्यं पूजयन्तो रघूत्तमम् ॥ २ ॥
प्रातःकाले रौप्यपीठे निधाय गुरुपादुके ॥
स्वर्णच्छत्रं तदुपरि स्वर्णदण्डेन संयुतम् ॥ ३ ॥
स्थापयित्वा स्वर्ण-रत्नैर्भूषयित्वाऽक्षतैरपि ॥
समर्प्य फलनैवेद्यमारार्तिक्यद्वयं तथा ॥ ४ ॥
ततो नित्यान्हिकं चक्रुरेवं नित्यं गुरूत्तमाः ॥
संचारं चक्रिरे सर्वानुद्धर्तुं जगतीतले ॥ ५ ॥
तदानीं राजराजोऽभूद्दिल्लीशो म्लेञ्च्छशेखरः ॥
महासैन्येन सहितस्संचरन्नवनीतले ॥ ६ ॥
नर्मदादक्षिणे देशे भीमरथ्यास्तटे शुभे ॥
सन्नत्याः पूर्वदिग्भागे योजनानां चतुष्टये ॥ ७ ॥
तत्रैव ब्रह्मणा पूर्वं यज्ञास्तु विविधाः कृताः ॥
तस्माद्ब्रह्मपुरीत्येव नाम्ना सा भुवि कीर्तिता ॥ ८ ॥
तत्राजगाम राजा सतुरङ्गाधिपतिस्तदा ॥
उवास कतिचित्कालं नदीतीरे मनोहरे ॥ ९ ॥
महासैन्ये समायाते महाराजसमीपगाः ॥
सर्वे समागतास्तत्र नारोभास्करपूर्वकाः ॥ १० ॥
पाण्डुरङ्गाभिधं क्षेत्रं स्वामिनोऽपि समागताः ॥
रविं ग्रस्तास्तमायान्तं ज्ञात्वा ते गुरुशेखराः ॥ ११ ॥
ग्रस्तास्तसूर्यग्रहणे श्रीपादानां समागमात् ॥
ब्राह्मणानां समाजोऽभून्नानादेशनिवासिनाम् ॥ १२ ॥
महासैन्यागमं श्रुत्वा शिष्यदर्शनकाङ्क्षया ॥
तत्र गन्तुं मनश्चक्रुश्श्रीपादाः कृपया तदा ॥ १३ ॥

नारोभास्करमुख्येभ्यो लिखित्वाऽऽदेशपत्रिकाः ॥
मन्त्राक्षतामुखान्दत्वा स्वामात्यान्प्रौढशेखरान् ॥ १४ ॥
भूषयित्वा ततो विप्रान्महासैन्यस्थितान्प्रति ॥
प्रेषयामासुरथ ते जग्मुस्तीव्रेण वाहिनीम् ॥ १५ ॥
गत्वा तत्र सभामध्ये निविष्टं प्रभुशेखरम् ॥
दृष्टवा भास्करसंज्ञं तं निषेदुः परमासने ॥ १६ ॥
कारयित्वा पत्रिकार्चां वाचयित्वा सभातले ॥
श्रीपादवार्तां प्रोचुस्ते श्रुत्वा सर्वे सुहर्षिताः ॥ १७ ॥
ततस्स राजभवनं गत्वा भास्करसंज्ञकः ॥
तत्र राजसभामध्ये नारोशङ्करपूर्वकान् ॥ १८ ॥
दृष्टवा तदग्रे श्रीपादपत्रिकागमनक्रमम् ॥
कथयित्वा तदीयातिमाहात्म्यं वक्तुमारभत् ॥ १९ ॥
आनन्दतीर्थमाहात्म्यं वेदव्यासागमक्रमम् ॥
कृष्णागमक्रमं मूलराघवागमनक्रमम् ॥ २० ॥
रघुनाथमुनीन्द्राणां काले गङ्गागमक्रमम् ॥
तुङ्गायां व्यासगमनं व्यासकूर्मागमक्रमम् ॥ २१ ॥
नित्यं क्षीराभिषेकेण कूर्मसंचरणक्रमम् ॥
महाचोरैः पदार्थानां पुनः प्रत्यर्पणादिकम् ॥ २२ ॥
क्षेमेण पाण्डुरङ्गारण्यक्षेत्रे श्रीपादासंस्थितिम् ॥
कथयित्वा सभामध्ये तद्गुणानप्यकीर्तयत् ॥ २३ ॥
श्रुत्वा तदुक्तमखिलं नारोभास्करसंज्ञकः ॥
कूर्मभ्रमो भवेन्मिथ्येत्युक्त्वा सोऽपजहास च ॥ २४ ॥
श्रुत्वा तदपहासोक्तिं नारोभास्करसंज्ञकः ॥
स्वीयं गृहं समागत्य प्रियायै तदबोधयत् ॥ २५ ॥
बाले राजसभामध्ये श्रीपादमहिमा मया ॥
कीर्तितः कूर्मभ्रमणमुक्तं क्षीराभिषेचनात् ॥ २६ ॥
तच्छ्रुत्वा स जहासाथ नारोशङ्करसंज्ञकः ॥
तेनाहं तप्तगात्रस्संश्चिन्तया गृहमागतः ॥ २७ ॥

नारोशङ्करनाम्नोऽपि प्रत्ययार्थमितः परम् ॥
महासंस्थानसंयुक्तान्श्रीपादानाव्हयेदिह ॥ २८ ॥
सभायां देवपूजायां क्षीरैः कूर्माभिषेचनं ॥
कृते तैस्सर्वसंदेहो गमिष्यति न संशयः ॥ २९ ॥
एवमुक्त्वा प्रियायै स श्रीपादागमने तदा ॥
आलोचनं तया साकं चक्रेऽत्यन्तमुदाऽन्वितः ॥ ३० ॥
आकर्ण्य भर्तुर्वचनं कर्णान्तायतलोचना ॥
मतिरेतादृशी भूयादिति तं प्रत्युवाच ह ॥ ३१ ॥
ततः प्रभातसमये भास्करः कुशलाग्रणीः ॥
स्वयं जगाम सहसा नारोशङ्करमन्दिरम् ॥ ३२ ॥
तेन साकं समालोच्य श्रीपादागमने तदा ॥
प्रेषयामास विज्ञप्तिपत्रं तेभ्योऽतिशीघ्रतः ॥ ३३ ॥
ततो विज्ञप्तिपत्रं ते वाचयित्वा सभातले ॥
महाविभवसंयुक्ता जग्मुस्तस्माद्वरूथिनीम् ॥ ३४ ॥
तानागतान् द्विजैश्श्रुत्वा तदा भास्करसंज्ञकः ॥
गज–वाजिरथोपेतसेनागणसमन्वितः ॥ ३५ ॥
सैन्यस्थिताशेषमुख्यगृहस्थैश्च समन्वितः ॥
चतुरङ्गबलोपेतस्सर्ववाद्यसुघोषितः ॥ ३६ ॥
सुवासिनीगणैः पश्चाल्लाजाऽऽर्तिक्यकराम्बुजैः ॥
समेतोऽभिजगामाशु श्रीपादागमने सति ॥ ३७ ॥
तानानीय गृहं पश्चात्पादप्रक्षालनादिकम् ॥
कृत्वाऽऽतिथ्यं चकाराथ तेषामात्मगृहे तदा ॥ ३८ ॥
ततस्समागतास्तत्र द्रष्टुं तद्देवतार्चनम् ॥
नारोशङ्करमुख्यास्तु परीक्षार्थं मठं प्रति ॥ ३९ ॥
स्नात्वा सम्यग्विधानेन जपान्ते गुरुशेखराः ॥
नवरत्नाभिषेकान्ते चक्रुः क्षीराभिषेचनम् ॥ ४० ॥
तस्मिन्दिने हठात्कूर्मो बभ्राम नितरां तदा ॥
नारोशङ्करमुख्यास्तु दृष्ट्वाऽऽश्चर्यसमन्विताः ॥ ४१ ॥

नतस्सीतासमेतस्य मूलरामस्य पूजनम् ॥
दृष्ट्वा मूर्तेर्लक्षणानि वभूवुर्भक्तिसंयुताः ॥ ४२ ॥
अभिनवमुनिवर्याः प्राप्य दिल्लीशसैन्यं
प्रतिदिनमथ नानादेशवार्ताधिपेन ॥
विधिवदखिलविप्रैस्संयुतास्तत्कथांतां
मनुदिनमथ भक्त्या कीर्तयेद्यस्स धन्यः ॥ ४३ ॥

**इति श्रीमद्वेणु...... पूर्णबोधगुरुवंशकथाकल्पतरौ महासैन्यं प्रति अभिनवतीर्थागमनकथावर्णनं नाम एकविंशः शाखासर्गः**

---

## अथ द्वाविंश्शाखासर्गः

एवं स्थितेषु श्रीपादेष्वेकस्मिन्दिवसे तदा ॥
सहवासी समागत्य रौप्यमुद्रासहस्रकम् ॥ १ ॥
ऊर्णावस्त्रं च श्रीपादपुरतोऽस्थापयत्तदा ॥
नत्वा ययाचे बहुधा पङ्क्तौ भोक्तुं गुरूत्तमान् ॥ २ ॥
इति तेनार्थितास्तेऽथ निश्शङ्कास्तं बभाषिरे ॥
कदापि भवतो भुक्तिरस्मत्पङ्क्तौ भवेत्कथम् ॥ ३ ॥
इत्युक्त्वा तत्पुनर्दत्वा स्नात्वाऽभ्यर्च्य रघूत्तमम् ॥
उपविष्टास्सभामध्ये भोक्तुं विद्वज्जनैस्सह ॥ ४ ॥
तदानीं कलहाकाङ्क्षी स एव त्वरयाऽन्वितः ॥
भोक्तुं श्रीस्वामिनां पङ्क्तौ सहवासी समागतः ॥ ५ ॥
तं दृष्ट्वा द्वारपालाद्याश्श्रीपादानामनुज्ञया ॥
प्रोचुर्नानाविधोपायैर्बहिर्गच्छेति पंङ्क्तितः ॥ ७ ॥
बोधितोऽपि प्रधानाद्यैर्यदा नैव जगाम सः ॥
बहिर्निष्कासयामासुस्तं तदा द्वारपालकाः ॥ ८ ॥
स गत्वा राजभवनं महाक्रोधसमन्वितः ॥
राज्ञे विज्ञापनं चक्रे स्वापमानं तु तैः कृतम् ॥ ८ ॥

राजारामगुरुर्नाथ सैन्यमध्ये समागतः ॥
नारोभास्करगेहेऽद्य वर्तते चातिभाग्यवान् ॥ ९ ॥
स सर्वान्विविधांल्लोकान्मुद्रया दहति ध्रुवम् ॥
लोकेषु राजधर्मोऽयमश्वादिष्विह दृश्यते ॥ १० ॥
तेनाद्य पशुवत्सर्वनरेषु क्रियते बत ॥
करोत्विदानीं तद्गेहं भोजनार्थं गतोऽस्म्यहम् ॥ ११ ॥
बहिर्निष्कासयामास स मां पात्रात्स्वसेवकः ॥
भवदीयोऽपि तेनाहं सभास्वत्यवमानितः ॥ १२ ॥
निर्गत्य तद्गृहाद्युष्मत्पादमूलं समागतः ॥
मानापमानौ भृत्यानां स्वामिनां तौ न संशयः ॥ १३ ॥
अभिमानात्तदखिलं विज्ञापयितुमागतः ॥
इत्युक्त्वा दण्डवद्भूमौ पपाताश्रुपरिप्लुतः ॥ १४ ॥
म्लेञ्च्छराजस्तदखिलं श्रुत्वा निपतितं भुवि ॥
उत्तिष्ठेति तमुक्त्वाऽथ सेवकानभ्यभाषत ॥ १५ ॥
तमानयन्तु तीव्रेण समर्था म्लेञ्च्छशेखराः ॥
पदार्थैर्निखिलैस्साकं जागरूका ममान्तिकम् ॥ १६ ॥
अथ तेनेत्थमाज्ञप्तास्तदानीं परिचारकाः ॥
शूरानाज्ञापयामासुरानेतुं गुरुशेखरान् ॥ १७ ॥
ते गत्वा विविधाश्शूरा नारोभास्करमन्दिरम् ॥
श्रीपादानाह्वयामासुर्वस्त्रद्वारमुपेत्य ते ॥ १८ ॥
वस्त्रागारस्य परितस्सर्वे रुध्वा बहिस्स्थिताः ॥
ग्रहीतुकामाश्श्रीपादान्द्वारं केचित्प्रपेदिरे ॥ १९ ॥
सावित्री यजमानस्य पत्नी तत्पूर्वमेव सा ॥
देवं संप्रेषयच्छीघ्रं ज्ञात्वा राजभयं वहिः ॥ २० ॥
स्थलान्तरं प्रेषयित्वा देवं दक्षिणसेवकैः ॥
संरक्षितुं पदार्थान्सा स्वयं द्वारे स्थिता तदा ॥ २१ ॥
तस्यां द्वारि स्थितायां तु तदा प्रभुवरस्त्रियम् ॥
द्वारि स्थितां राजदूतास्तामूचुर्विनयान्विताः ॥ २२ ॥

वयं समागता मातरिह राजाज्ञया बत ॥
पदार्थसहितानेतान्नेतुं राजगृहं प्रति ॥ २३ ॥
मुञ्च मार्गं प्रविश्यान्तः पश्यामो वित्तसंचयम् ॥
गृहीत्वाऽन्यपदार्थानप्यथ गच्छामहे वयम् ॥ २४ ॥
इति तेषां वचश्श्रुत्वा सावित्री तानुवाच ह ॥
शूराश्श्रुण्वन्तु मद्वाक्यमन्तस्सन्ति गुरूत्तमाः ॥ २५ ॥
दण्डकौपीनकाषायवासोभिः परिभूषिताः ॥
सन्न्यासिनां विरक्तानां कथं तेषां धनागमः ॥ २६ ॥
राजा त्वाज्ञापयामास भवतां नीचबोधितः ॥
तस्मात्पुनरितो गत्वा भवद्भिर्नृपतेः पुरः ॥ २७ ॥
वाच्यं मयोक्तमखिलं स यथा वदति ध्रुवम् ॥
तथा करोमि कुशलैर्भवद्भिश्चाशु गम्यताम् ॥ २८ ॥
इति तस्या वचश्श्रुत्वा शूरा गत्वा नृपान्तिकम् ॥
सर्वं विज्ञापयामासुस्तदाऽऽकर्ण्य नृपस्ततः ॥ २९ ॥
तद्गृहान्तर्नं गन्तव्यमित्युक्त्वा तैः पुनस्तदा ॥
श्रीपादानाह्वयामास परीक्षार्थं स्वमन्दिरम् ॥ ३० ॥
गतास्ते पादचारेण पादुकाभ्यां तदालयम् ॥
श्रीपादा बहुसाहस्रैर्विद्वज्जनमुखैस्सह ॥ ३१ ॥
उभयोःपार्श्वयोर्मार्गे सर्वे संन्यस्थिता जनाः ॥
चक्रुर्दण्डप्रणामं ते गच्छतां च च पदे पदे ॥ ३२ ॥
ते गत्वा राजभवनं राज्ञो वस्त्रगृहाद्बहिः ॥
अत्युत्तमे वस्त्रगृहे उपविष्टास्तदाज्ञया ॥ ३३ ॥
नारोभास्करसंज्ञं सोऽपृच्छन्नृपतिशेखरः ॥
राजारामगुरुश्चात्र किमर्थमयमागतः ॥ ३४ ॥
शत्रोर्गुरुःकथमयं त्वद्गृहे विनिवेशितः ॥
कुतो बहिश्चकारामुं स्वजनं सहवासिनम् ॥ ३५ ॥
इत्थं नृपवचश्श्रुत्वा नारोभास्करसंज्ञकः ॥
तत्सर्वं वक्तुमारेभे नारोशंकरसंयुतः ॥ ३६ ॥

सच्छिद्रकर्णा ये सन्ति धरणीमण्डले नृप ॥
निखिलानां गुरुरयं राजारामस्य किं पुनः ॥ ३७ ॥
ब्राह्मणानां गुरुरयं वैष्णवानां विशेषतः ॥
तत्राप्युत्तरदेशस्थमठस्थानां गुरुर्ध्रुवम् ॥ ३८ ॥
सहवासी न विप्रोऽयं सामुद्रेयकुलोद्भवः ॥
तस्मान्निष्कासयामास पङ्क्तेर्गुरुवरस्त्वमुम् ॥ ३९ ॥
स्वापराधं समाच्छाद्य तेष्वारोप्य विचक्षताम् ॥
अपकीर्तिं च भवतां वृथैवायं ददौ किल ॥ ४० ॥
राजा त्वं सर्वलोकानां त्राता दुर्जनशिक्षकः ॥
कुर्याद्विचार्य महतां मानहानिं व्यतिक्रमात् ॥ ४१ ॥
सन्यासिनां विरक्तानां निस्स्वानां नृपशेखरः ॥
कदाचिदपि नो कुर्यान्मानहानिं सकारणात् ॥ ४२ ॥
पृथिवी यदि मग्ना स्यादन्नमेव विषं भवेत् ॥
यदि राजा हर्तुमिच्छेन्निरोध्दुं तत्र कः क्षमः ॥ ॥ ४३ ॥
इति विज्ञापितं श्रुत्वा युक्तायुक्तं विचार्य च ॥
राजराज दयासिन्धो यथेच्छसि तथा कुरु ॥ ४४ ॥
इति तस्य वचश्श्रुत्वा नीतियुक्तं नराधिपः ॥
श्रीपाददर्शनं कर्त्तुमियेषाथ तदग्रतः ॥ ४५ ॥
ततस्तमूचे नृपतिं नारोभास्करसंज्ञकः ॥
नैव सिंहासनस्थायी यतिं पश्येत्कदाचन ॥ ४६ ॥
इत्युक्तस्सन्नृपः प्राह पत्रे तं चित्रलेखकैः ॥
लेखयित्वा दर्शयस्व पश्ये तं कथमस्ति सः ॥ ४७ ॥
इत्युक्तस्स नृपेणाथ चतुरं चित्रलेखकम् ॥
समाहूय गुरुश्रेष्ठान्दर्शयामास लेखितुम् ॥ ४८ ॥
सत्याभिनवतीर्थान्स विलोक्याथालिखत्पटे ॥
तेषां रूपं रञ्जयित्वा दर्शयामास भूपतेः ॥ ४९ ॥
स भूपतिः पटे दृष्टवा गुरूणां रूपमद्भुतम् ॥
तत्पृष्ठभागे रक्षार्थं संस्थितं रघुपुङ्गवम् ॥ ५० ॥

धनुर्बाणधरं वीरं महासैन्यसमन्वितम् ॥
शूरैः करालैः परितो नानायुधधरैर्युतम् ॥ ५१ ॥
दृष्ट्वा संत्रस्तगात्रस्सन्नाच्छाद्यांञ्जलिना दृशौ ॥
ऊचे पटं परित्यज्य सन्न्यासी गच्छतादिति ॥ ५२ ॥
हित्वा सिंहासनं तस्मादन्तर्गन्तुं समुद्यतम् ॥
तदा राजानमवदन्नारोभास्करसंज्ञकः ॥ ५३ ॥
राजराज जगन्मान्या यतयश्चावमानिताः ॥
तूष्णीं गताश्चेल्लोकेषु तेषां क्षेमं कथं भवेत् ॥ ५४ ॥
तस्मात्पृथ्वीपते मान्यान्मानयित्वा सभातले ॥
युष्मन्मुद्राङ्कितं ताम्रपत्रं शासनसंज्ञकम् ॥ ५५ ॥
दत्वा तेभ्यो गजश्रेष्ठ तानारोप्य गृहं प्रति ॥
प्रेषयेस्तेन सत्कीर्तिरागच्छेत्तव भूपते ॥ ५६ ॥
इत्थं तेनोक्तमाकर्ण्य नीतियुक्तं धराधिपः ॥
अनुज्ञां प्रददौ तस्य यथेष्टं क्रियतामिति ॥ ५७ ॥
ततस्स बहिरागत्य राजराजेश्वराज्ञया ॥
तेषां मनोऽनुसारेण कर्तुं समुपचक्रमे ॥ ५८ ॥
कारयित्वाऽथ ताम्रेण शासनं मुद्रयाऽन्वितम् ॥
गजोपर्युपवेश्याथ श्रीपादान् राजमन्दिरान् ॥ ५९ ॥
चतुरङ्गबलोपेतो नानावादित्रसंयुतः ॥
श्रीपादानुमतो भूत्वा शकटोपरि शर्कराम् ॥ ६० ॥
विधाय दापयन् विप्रलोकेभ्योऽञ्जलिभिर्बहु ॥
सैन्येषु राजमार्गेण चारयन्नतिसंभ्रमात् ॥ ६१ ॥
क्रमाद्ब्रह्मपुरीमेत्य स्वीयवस्त्रगृहेषु तान् ॥
पूजयामास नितरां प्रभुवर्यगणैस्सह ॥ ६३ ॥
तेनैव नितरां प्रीत्या नारोभास्करमन्दिरे ॥
श्रीपादेभ्यस्ततो राजा स्वीयातिथ्यमकारयत् ॥ ६३ ॥
ततः कतिपयाहस्सु पूजयित्वा गुरूत्तमान् ॥
नृपतेराज्ञया सैन्यात्प्रेषयामास भक्तितः ॥ ६४ ॥

इत्थं नारोभास्करस्तान्प्रेषयित्वाऽथ सैन्यतः ॥
कृतकृत्यं तदा मेने स्वात्मानं कीर्तिमाप च ॥ ६५ ॥
एवं चोराग्निनृपतिभयैर्मुक्तास्तदर्चिताः ॥
गुरुराजप्रसादात्ते लोके ख्यातास्तदाऽभवन् ॥ ६६ ॥
अभिनवमुनिवर्यकीर्तिमग्यामवनिलेऽनुदिनं प्रकीर्तयेद्यः ॥
स भवति दुरितौघवन्धमुक्तःप्रथितयशा नितरां बुधाग्रगण्यः ॥ ६७ ॥
**इति श्रीवेणुपल्ली....... विरचिते गुरुकथाकल्पतरौ श्रीसत्याभिनवचरिते दिल्लीम्लेञ्छराजभयपरिहारकथनं नाम द्वाविंशः शाखासर्गः समाप्तः**



## अथ त्रयोविंशश्शाखासर्गः

सत्याभिनवतीर्थास्ते ततस्तस्माद्विनिर्गताः ॥
पाण्डुरङ्गक्षेत्रमेत्य जग्मुः कर्णाटकं प्रति ॥ १ ॥
चिन्तामण्युपनामाख्यविद्याधीशाख्यपण्डितान् ॥
कुम्भकोणपुरात्तीव्रं समाहूयातिविश्रुतान् ॥ २ ॥
दत्वा तुर्याश्रम तेभ्यश्श्रीपादाः प्रीतिपूर्वकम् ॥
न्यासादिकं दर्शयित्वा तदा सन्यासिशेखराः ॥ ३ ॥
प्रणवं चोपदिश्याथ तेषु प्रीता गुरूत्तमाः ॥
सत्याधिराजतीर्था इत्येवं नाम ददुस्तदा ॥ ४ ॥
अभिषिच्यासाणुसंस्थानं दत्वा तेभ्योऽतिहर्षिताः ॥
प्रेषयामासुरथ तान्विजयाख्यपुरीं प्रति ॥ ५ ॥
उषित्वा मासमेकं ते तत्र शिष्यैस्समर्चिताः ॥
तप्तमुद्रादिकांस्तेभ्यो दत्वा तस्माद्विनिर्गताः ॥ ६ ॥
सप्तगोदावरीतीरं जग्मुर्दिग्विजयेच्छया ॥
तत्र राजमहेन्द्राख्यपुरं प्राप्य गुरूत्तमाः ॥ ७ ॥
लोकैस्संपादयामासुर्वित्तं ते बहुलं तदा ॥
सत्याधीशमुनेस्तत्र वृन्दावनमवेक्ष्य ते ॥ ८ ॥

स्वप्ने तैरर्थितास्तेभ्य दत्वा स्वर्णाक्षिणी मुदा ॥
तस्मान्निर्गत्य तत्रस्थाननुज्ञाप्य पुरं प्रति ॥ ९ ॥
इतस्ततस्संचरन्तस्सत्यनूत्नान्तिकं ययुः ॥
आगत्य गुरुपादाब्जयुगं दृष्ट्वाऽतिहर्षिताः ॥ १० ॥
स्वानीतकनकैस्तेभ्यस्तेऽभिषेकं प्रचक्रिरे ॥
सत्याभिनवतीर्थास्तैरभिषिक्ता मुदाऽन्विताः ॥ ११ ॥
ब्राह्मणेभ्यो ददुर्द्रव्यं निर्माल्यमिति चात्मनः ॥
एवं पुनः पुनर्गत्वा संपाद्य बहुलं धनम् ॥ १२ ॥
स्वगुरुभ्यो ददुस्सर्वं तदर्थं समुपार्जितम् ॥
ततस्ते वेङ्कटाधीशयात्रां कृत्वाऽतिशीघ्रतः ॥
बेलूरमागता गन्तुं रौगार्ताश्चोलमण्डलम् ॥ १३ ॥
तस्मिन्क्षीरनदीतीरे क्रोशमात्रे गुरूत्तमाः ॥
तारणाषाढशुक्लस्थनवमीदिवसे तदा ॥ १४ ॥
कृत्वा स्नानादिकं विद्यापतिवृन्दावनान्तिके ॥
सत्याभिनवतीर्थेभ्यो लिखित्वा पत्रिकां तदा ॥ १५ ॥
प्रेषयित्वाऽणुसंस्थानपदार्थान्ब्राह्मणैस्सह ॥
देहं त्यक्त्वा हरिपदं जग्मुरत्यन्तदुर्लभम् ॥ १६ ॥
सत्याभिनवतीर्थास्तां वार्तां श्रुत्वाऽतिदुःखिताः ॥
बभूवुरणुसंस्थानपदार्थेन सहागतः ॥ १७ ॥
ततः कालान्तरे व्यासकेशवाचार्यभूसुरान् ॥
स्वसमीपे स्थापयित्वा जग्मुस्ते चोलमण्डलम् ॥ १८ ॥
कुम्भकोणक्षेत्रमध्ये तेभ्यस्तुर्याश्रमं तदा ॥
दत्वाऽभिषेकं चक्रुस्ते महाविभवपूर्वकम् ॥ १९ ॥
सत्यपूर्णोऽयमित्येवं नाम दत्वा गुरूत्तमाः ॥
नाचारपुर्यां ज्येष्ठाद्यचतुर्दश्यां परं ययुः ॥ २० ॥
अथ श्रीमत्सत्यपूर्णतीर्था भक्त्या निरन्तरम् ॥
सत्याभिनवतीर्थानां संप्रदायानुसारतः ॥ २१ ॥

प्रातरारभ्य निखिलमामन्त्रणमुखादिकम् ॥
कर्म चक्रुर्विधानेन काले काले गुरूक्तितः ॥ २२ ॥
ततो बंकापुरप्रान्तमागत्य गुरुशेखराः ॥
डंबले वादिविजयं चक्रिरे राजपूजिताः ॥ २३ ॥
सौदिं गत्वाऽथ भरते सोमशेखरपूजिताः ॥
तथा वेणुपुरे शैवैः पूजिताश्च निरन्तरम् ॥ २४ ॥
एवं कृष्णातुङ्गभद्रामध्यदेशे गुरूत्तमाः ॥
संचरतस्सज्जनौघैः पूजिता अभवंस्तदा ॥ २५ ॥
भोजयित्वाऽथ विधिवद्विद्वद्भ्यःप्रीतिपूर्वकम् ॥
नानाविधपदार्थानां दानानि बहु चक्रिरे ॥ २६ ॥
अथ ते गार्लपाडस्थरामाचार्यद्विजोत्तमान् ॥
समाहूय ददुः प्रीतास्संस्थानं विधिपूर्वकम् ॥ २७ ॥
तुंङ्गभद्रानदीतीरे पुरे त्विट्टिगिसंज्ञके ॥
सन्न्यासं प्रददुः प्रीता विजयादशमीदिने ॥ २८ ॥
पौर्णिमादिवसे प्राप्ते मध्यान्हे गुरुशेखराः ॥
तेभ्यः कृत्वाऽभिषेकं ते सत्यवर्यमुनीश्वराः ॥ २९ ॥
इति नाम मुदा दत्वा पञ्चविंशत्तमाब्दके ॥
तैस्साकं देवपूजां ते चक्रुर्विद्वत्सभातले ॥ ३० ॥
अथ तेभ्योऽणुसंस्थानं दत्वा दिग्विजयाय तान् ॥
प्रेषयामासुरथ ते जग्मुर्देशाननेकशः ॥ ३१ ॥
यत्र यत्र गतास्तत्र प्रसंगं परवादिभिः ॥
चक्रुर्नित्यं महाभाष्ये द्वैताद्वैते गुरूत्तमाः ॥ ३२ ॥
ततः कोप्राभिधं क्षेत्रं गत्वा ते गुरुशेखराः ॥
तत्र स्नानादिकं कृत्वा तीर्थमुद्रादिकं ददुः ॥ ३३ ॥
मुद्राप्रदानसमये स्मार्तो मठमुपेत्य च ॥
मुद्रादिकं प्रगृह्याथ स भक्त्या वैष्णवोऽभवत् ॥ ३४ ॥
तस्मिन् दिने तस्य पुत्रो नद्यां मग्नो वभूव ह ॥
त [illegible]र्निष्कासयामासुर्निश्चेष्टं तं तदा जनाः ॥ ३५ ॥

श्रुत्वा पुत्रं मृतं माता रुरोद करुणं यथा ॥
वयं वैष्णवतां प्राप्ताः पुत्रस्तस्मान्मृतिं गतः ॥ ३६ ॥
इति तस्या वचश्श्रुत्वा पतिर्भार्यामभर्त्सयत् ॥
तां वार्तां स्वजनैश्श्रुत्वा श्रीपादाः खिन्नमानसाः ॥ ३७ ॥
नद्यास्तीरं स्वयं गत्वा चोपविष्टास्तदग्रतः ॥
द्वारपालैस्तु परितो धृतं वस्त्रं तदाज्ञया ॥ ३८ ॥
तीर्थेन प्रोक्षणं चक्रुश्श्रीपादा बालकोपरि ॥
तेषामनुग्रहाद्बालो निश्चेष्ठोऽप्युत्थितोऽभवत् ॥ ३९ ॥
श्रीसत्यपूर्णतीर्थास्तां वार्तां श्रुत्वा मठद्विजैः ॥
कलौ न कार्यमित्येवं प्रेषयामासुरादिजान् ॥ ४० ॥
तदाज्ञां शिरसा धृत्वा सत्यवर्यमुनीश्वराः ॥
निर्गत्य दक्षिणं देशं गन्तुं चक्रुर्मनस्तदा ॥ ४१ ॥
एवं दिग्विजयं कृत्वा गुरूणां दर्शणनेच्छया ॥
श्रीसत्यपूर्णतीर्थाना पादमूल ययुर्मुदा ॥ ४२ ॥
अथ ते कतिचित्कालमुषित्वा गुरुसंन्निधौ ॥
अनुज्ञप्ताः पुनस्तैस्ते गार्लपाडादिकं गताः ॥ ४३ ॥
श्रीसत्यपूर्णतीर्थास्ताननुज्ञाप्य ततःपरम् ॥
इतस्ततस्सचरंन्तो जग्मुः कर्नाटकं प्रति ॥ ४४ ॥
महासंस्थानमठगैर्मुख्यैर्विप्रवरैस्तदा ॥
श्रीसत्यवर्यतीर्थानां विरोधोऽभूत्परस्परम् ॥ ४५ ॥
श्रीसत्यपूर्णतीर्थेभ्यो बोधयित्वा क्षणे क्षणे ॥
विरोधं जनयामासुर्गुरूणां तेष्वकारणात् ॥ ४६ ॥
श्रीसत्यपूर्णतीर्थास्तान्समाहूयातिशीघ्रतः ॥
गृहीत्वा तेऽणुसंस्थानं पिनगुंडयां न्यवेशयन् ॥ ४७ ॥
वेङ्कटाद्रिं ततो गत्वा स्नात्वा स्वामिसरोजले ॥
दृष्ट्वा श्रीवेंङ्कटाधीशं तदानीं गुरुशेखराः ॥ ४८ ॥
श्रीसत्यपूर्णतीर्थास्तु मन्नाराख्यपुरस्थितान् ॥
बाबाचार्यान्समाहूय ददुस्संस्थानमाशु ते ॥ ४९ ॥

दत्वा सन्न्यासमथ तानभिषिच्य गुरोः पदे ॥
तेभ्यो नाम ददुः प्रीताश्श्रीसत्यविजया इति ॥ ५० ॥
ततः कर्नाटकं गत्वा श्रीसत्यविजयैस्सह ॥
कृत्वा दिग्विजयं तत्र मानिताः प्रभुशेखरैः ॥ ५१ ॥
सत्यवर्यास्ततस्तस्मादनुज्ञाप्य गुरूत्तमाः ॥
तपसे प्रेषयामासुस्तदा पद्मसरोवरम् ॥ ५२ ॥
ततो भागीरथीयात्रां कर्तुं संस्थानसंयुताः ॥
श्रीसत्यविजयैस्साकं निर्गताश्चोलमण्डलात् ॥ ५३ ॥
क्रमात्सातारिपर्यन्तं गत्वा कृष्णातटे ततः ॥
कह्लोलनरसिंहस्य यात्रां चक्रुर्गुरूत्तमाः ॥ ५४ ॥
गच्छतां गुरुवर्याणां गङ्गायात्रार्थमादरात् ॥
अनुजग्मुस्सत्यवर्या कृष्णवेणीतटावधि ॥ ५५ ॥
श्रीसत्यपूर्णगुरवस्तान्समाधाय नीतितः ॥
रहस्याहूय ते प्रोचुस्संकटाहतचेतसः ॥ ५६ ॥
एतेभ्यो वचनं दत्तमस्माभिरनुसंकटात् ॥
इतो भवद्भिर्गन्तव्यमिदानीमस्मदाज्ञया ॥ ५७ ॥
तूष्णीं स्थेयं स्वस्थचित्तैरस्मदागमनावधि ॥
पश्चाद्वयं तु भवतां करिष्यामो मनोरथम् ॥ ५८ ॥
इत्थं तेषां वचश्श्रुत्वा खिन्नचित्तास्ततः परम् ॥
अनुज्ञप्तास्तु गुरुभिः पुरात्तस्माद्विनिर्गताः ॥ ५९ ॥
ततस्ते सत्यविजयतीर्थेभ्यः प्रीतिपूर्वकम् ॥
महासंस्थानमखिलं दत्वा यात्राजनैस्सह ॥ ६० ॥
यदा भागीरथीयात्रानिमित्तं गन्तुमुद्यताः ॥
श्रीसत्यपूर्णश्रीपादास्तदा विप्रा मठे स्थिताः ॥ ६१ ॥
यात्रार्थं ये निर्गतास्ते पदार्थान् विविधान् स्वकान् ॥
चक्रुस्ते लेखकाधीनं श्रीसत्यविजयाग्रतः ॥ ६२ ॥
मठे निधाय सर्वस्वं गता यात्रापरायणाः ॥
श्रीसत्यपूर्णगुरुभिस्साकं जग्मुर्गतस्पृहाः ॥ ६३ ॥

गतेषु सत्यपूर्णेषु गङ्गायात्रापरेष्वथ ।।
तदानीं तैरनुज्ञप्ताश्श्रीसत्यविजयाभिधाः ।। ६४ ।।
महासंस्थानसंयुक्ता जागरूकास्त्वहर्निशम् ।।
विनिर्गत्य क्रमात्तस्मात् कुरिष्पट्टं प्रपेदिरे ।। ६५ ।।
यदा त्वजाद्रिमासुस्ते श्रीसत्यविजयाभिधाः ।।
सत्यवर्या अपि तदा तत्समीपे समागताः ।। ६६ ।।
ततस्ते सत्यविजयतीर्थान्मेषाद्रिसंस्थितान् ।।
श्रुत्वा द्विजवरैस्स्वीयैरूषुस्तत्रैव तद्दिने ।। ६७ ।।
चिन्तयाऽथ शयानेषु सत्यवर्येषु रात्रिषु ।।
"प्रयत्नमेकमि"ति तैश्श्रुतं स्वप्ने गुरूत्तमाः ।। ६८ ।।
प्रभातसमये तेऽथ प्रबुद्धा हर्षनिर्भराः ।।
राम–सीतादर्शनार्थं तेऽपि तत्र समागताः ।। ६९ ।।
दृष्ट्वा ऽऽगतान्सत्यवर्यान्हनुमत्सागरस्थितः ।।
रङ्गभट्टाभिधो बालाचार्यैर्युक्तौ न्यरोधयत् ।। ७० ।।
श्रीसत्यविजयानां च समीपे ये पुरा स्थिताः ।।
महाराष्ट्रस्य संबन्धिपत्तयो विप्रसंयुताः ।। ७१ ।।
त एव स्वेशपत्रेण सत्यवर्यगुरूत्तमैः ।।
आनीतेन तदैतेषामधीनास्संबभूविरे ।। ७२ ।।
तेभ्यस्स्वार्पितचित्तेभ्यो देवदेवो दयानिधिः ।।
भूत्वा प्रसन्नस्त्वरया सद्यस्तद्दर्शनं गतः ।। ७३ ।।
लक्कुंडिसंस्थितानन्दतीर्थाचार्यास्ततः परम् ।।
हृदा विचारयामासुरग्रे कार्यं द्विजोत्तमाः ।। ७४ ।।
महासंस्थानसंयुक्ताश्श्रीसत्यविजयाभिधाः ।।
वयसा चातिवृद्धा हि परं त्वाश्रमतोऽधमाः ।। ७५ ।।
अणुसंस्थानसंयुक्तास्समर्थाः कार्यसाधने ।।
आश्रमे श्रीसत्यवर्या ज्येष्टाश्च वयसाऽधमाः ।। ७६ ।।
तस्मातु दण्डव्यत्यासं कारयित्वा परस्परम् ।।
उभाभ्यामणुसंस्थानं सत्यवर्येभ्य एव तत् ।। ७७ ।।

श्रीसत्यविजयार्येभ्यो महासंस्थानमित्यथ ॥
उभयोरनुमत्या तत्कार्यमेवेति निश्चिताः ॥ ७८ ॥
ततस्तयोस्समीपं ते गत्वा सर्वमनूद्य च ॥
कृत्वा माध्यस्थ्यमुभयोरैकमत्यं प्रचक्रिरे ॥ ७९ ॥
एवं तेषां वचश्श्रुत्वा श्रीपादौ तावुभावपि ॥
कृत्वा परस्परं दण्डव्यत्यासं त्वैकमत्यतः ॥ ८० ॥
मत्वा संस्थानसंयुक्ताश्श्रीसत्यविजयाभिधाः ॥
ददुश्श्रीसत्यवर्येभ्यो नाम सत्यप्रिया इति ॥ ८१ ॥
अथ ते त्वणुसंस्थानपदार्थान्देवसंयुतान् ॥
दत्वाऽनुज्ञां ददुस्तेभ्यस्संचारार्थं महीतले ॥ ८२ ॥
यस्सत्यप्रियतीर्थ—सत्यविजयश्रीपादमत्यैकता—
माहात्म्यं नितरां प्रसन्नहृदयः प्रातस्सदा कीर्तयेत् ॥
सोऽस्मिन्भूवलयस्थिताखिलकविश्लाघ्यो भवेच्छत्रव
स्सर्वे तस्य वशा भवेयुरवनीपालादयः किं पुनः ॥ ८३ ॥

**इति श्रीम . . . . पूर्ण ोधगुरुवंशकथाकल्पतरौ श्रीसत्यविजयतीर्थ—श्रीसत्यप्रियतीर्थमत्यैक्यकथनं नाम त्रयोविंशः शाखासर्गः समाप्तः ॥**

## अथ चतुर्विंशःशाखासर्गः

ततस्ते सत्यविजयतीर्थाः कर्णाटकं प्रति ॥
गत्वा तत्र स्थिताशेषलोकेभ्यो देवदर्शनम् ॥ १ ॥
कारयित्वा ततस्तीर्थादिकं दत्वा गुरूत्तमाः ॥
आरण्यां चक्रिरे वासं षडरण्यसमीपतः ॥ २ ॥
ततः कृष्णाख्यपन्तेन मठे मुख्याभिमानिना ॥
पूजिताः कतिचित्कालमूषुस्ते स्वेच्छया सुखम् ॥ ३ ॥
सोऽथ नानाविधैर्वस्त्रैः पदार्थैस्स्वर्णनिर्मितैः ॥
अलङ्कारैर्बहुविधैश्श्रीपादान्समतोषयत् ॥ ४ ॥

ततः कतिपयैः कालैस्सत्यपूर्णमुनीश्वराः ॥
कृत्वा भागीरथीयात्रां कोल्पुरं ते समागताः ॥ ५ ॥
रोगेण पीडितास्तेऽथ श्रीसत्यविजयाभिधान् ॥
सुशीघ्रमाव्हयामासुश्श्रुत्वा तेऽथ समागताः ॥ ६ ॥
सत्यप्रियाश्चापि तदा सामीप्यात्स्वजनैस्सह ॥
श्रुत्वा तदागमं जग्मुस्तैस्सहैव दिदृक्षया ॥ ७ ॥
गत्वा ते गुरुसामीप्य श्रीमत्सत्यप्रियैस्सह ॥
नमस्कृत्वा परवशान्परामर्शं प्रचक्रिरे ॥ ८ ॥
पराभवाभिधे वर्षे ज्येष्ठमासे सितेतरे ॥
पक्षे द्वितीयादिवसे सत्यपूर्णमुनीश्वराः ॥ ९ ॥
स्नात्वाऽथ प्राणदेवेन सह तत्त्वाभिमानिभिः ॥
पूजयन्तो विष्णुमूर्तिं जग्मुर्वैकुण्ठमुत्तमम् ॥ १० ॥
वृन्दावनमभूत्तत्र श्रीसत्यविजयाज्ञया ॥
समाराधनपूर्वं ते चक्रुस्सत्यप्रियैस्सह ॥ ११ ॥
ततस्सर्वाणुसंस्थानपदार्थादीन्गुरूत्तमाः ॥
दत्वा सत्यप्रियाख्येभ्यश्श्रीसत्यविजयाभिधाः ॥ १२ ॥
पुनर्दिग्विजयार्थं तान्प्रेषयित्वा ततः परम् ॥
स्वयं कर्णाटकं जग्मुर्महासंस्थानसंयुताः ॥ १३ ॥
गतेषु सत्यविजयेष्वथ सत्यप्रियास्तदा ॥
मुदा दिग्विजयं कर्तुं जग्मुर्गोदावरीतटम् ॥ १४ ॥
तदानीं दक्षिणाधीशमहासैन्ये समागते ॥
विसाजिपंत–मोहरोपंतमुख्यप्रभूत्तमैः ॥ १५ ॥
आहूतास्तत्र गत्वा तैर्मानिता गुरुशेखराः ॥
बाजीराजमुखैस्सर्वैस्तेन ताम्रोऽप्यपूजयत् ॥ १६ ॥
स ददौ रामनगरीं परिपूज्याम्बरादिभिः ॥
अस्मदाज्ञानासारेण सर्वदेशाधिपैस्सह ॥ १७ ॥
सत्यप्रियाख्यश्रीपादा राजराजेश्वरो यथा ॥
तथैव पूजनीयाश्च निरुपद्रवपूर्वकम् ॥ १८ ॥

लेखयित्वा पत्रमेवं स्वमुद्राचिन्हितं तदा ।।
दत्वा तेभ्यः प्रीतिपूर्वं प्रेषयामास सैन्यतः ।। १९ ।।
तस्माद्विनिर्गतास्तेऽथ राचूरनगरं ययुः ।।
फत्तेसिंगोऽपि तत्पूर्वं तस्मिन्नेव समागतः ।। २० ।।
श्रीपादागमनं श्रुत्वा तेषामभिययौ स्वयम् ।।
तेभ्यो नत्वाऽथ तैस्साकं स्वयं सैन्यं विवेश ह ।। २१ ।।
अकारयत्तदा नित्यमातिथ्यं विधिपूर्वकम् ।।
स्वयं विज्ञापनं चक्रे श्रीपादेभ्योऽतिभक्तितः ।। २२ ।।
स्वामिनश्श्रूयतां श्रीमत्कर्णाटकमितः परम् ।।
जयार्थं गम्यतेऽस्माभिर्भवद्भिः प्रार्थ्यतां हरिः ।। २३ ।।
इति तेनार्थिताः प्रोचुः फत्तेसिंगं गुरूत्तमाः ।।
भवतामेव तद्राज्यं भविष्यति न संशयः ।। २४ ।।
इत्येतैरुक्तमाकर्ण्यं भक्तिपूर्वं गुरूत्तमान् ।।
नमस्कृत्वाऽभ्यनुज्ञातस्तैः कर्णाटकमाययौ ।। २५ ।।
तेऽपि तस्मात्तु निर्यातास्श्रीमत्सत्यप्रियास्तदा ।।
मेलकोटं समागत्य प्रभुणा चातिमानिताः ।। २६ ।।
तत्रोषित्वा गुरुश्रेष्ठा प्रभाते पर्वतोपरि ।।
दर्शनार्थं नृसिंहस्य गतास्ते प्रभुणा सह ।। २७ ।।
द्वारे मुद्रा कृता देवपूजकेन पुरैव तु ।।
समये पूजकाभावास्सर्वे द्वारे स्थितास्तदा ।। २८ ।।
सर्वैः प्रतीक्षितो मार्गः पुजकेऽनागते सति ।।
श्रीपादा पस्प्रशुर्मुद्रां तद्भेदस्तत्क्षणादभूत् ।। २९ ।।
दृष्ट्वा श्रीपादमाहात्म्यं सर्वे राजमुखास्तदा ।।
देवप्रसादश्चान्येषु नैवमित्यस्तुवन्गुरून् ।। ३० ।।
इत्थं श्रीपादमाहात्म्यं प्रसिद्धं च स्थले स्थले ।।
तद्ग्रन्थविस्तृतिभयात्संकुच्य कथितं मया ।। ३१ ।।
ततस्तस्मात्प्रयातास्ते गत्वा श्रीरङ्गपट्टणम् ।।
राज्ञा सम्मनिता नित्यमूषुस्तत्र गुरूत्तमाः ।। ३२ ।।

श्वेतच्छत्रं रत्नचितस्वर्णवेत्रं तथा परम् ॥
रौप्यवेत्रं च प्रददौ तेभ्यः पाण्डित्यमीक्ष्य सः ॥ ३३ ॥
श्रीपादास्तु प्रयातास्ते गद्वालादिमहास्थले ॥
चक्रुर्दिग्विजयं स्वैरं राजराजसुमानिताः ॥ ३४ ॥
यदा श्रीसत्यविजयाः कोल्पूरात्तु विनिर्गताः ॥
तदा देशेषु संचारं कृत्वा कर्णाटकं गताः ॥ ३५ ॥
श्रीपादागमनं श्रुत्वा षडरण्यकसंस्थितः ॥
कृष्णाजिपंतस्स्वैर्विप्रैराव्हयामास तांस्तदा ॥ ३६ ॥
तैरर्थितास्तु श्रीपादाष्षडरण्यकसंज्ञकम् ॥
गत्वा कृष्णाजिपंतेन पूजितास्त्वारणीं ययुः ॥ ३७ ॥
तत्र वेङ्कटराजेन पूजिताश्च सभातले ॥
ऊषुस्ते कतिचित्कालं तत्रैव गुरुशेखराः ॥ ३८ ॥
ततः कृष्णाजिपंतेन कनकैरभिषेचिताः ॥
नानाविधपदार्थैस्ते तोषिताश्च निरन्तरम् ॥ ३९ ॥
स्वर्णपीठं वज्रचितसंपुटं रत्नमण्डितान् ॥
अलङ्कारान्ददौ तेभ्यो भक्त्या कृष्णाख्यपण्डितः ॥ ४० ॥
तदानीं सत्यविजयश्रीपादानां समीपगाः ॥
संस्थानदाने त्वन्येभ्यो वृथा यत्नं प्रचक्रिरे ॥ ४१ ॥
तां वाचं तैरथ श्रुत्वा श्रीसत्यविजयाभिधाः ॥
क्रियां स्मृत्वा गुरुवरास्तूष्णीमेवाभवंस्तदा ॥ ४२ ॥
सत्यप्रियास्तदखिलं श्रुत्वा स्वीयजनैस्ततः ॥
आर्याणामन्तिकं नैव गता व्यत्यस्तचेतसः ॥ ४३ ॥
ततस्ते सत्यविजयाश्श्वासरोगेण पीडिताः ॥
चक्रुर्दिग्विजयं चोलमण्डले तदनन्तरम् ॥ ४४ ॥
श्रीपादास्त्वारणीमेत्य वेङ्कटप्रभुसद्मनि ॥
देवपूजां ततः कृत्वा भुक्त्वा द्विजगणैस्सह ॥ ४५ ॥
उषित्वा तद्दिने रात्रौ श्वासेनात्यन्तपीडिताः ॥
ब्राह्मे मुहूर्ते तूत्थाय चोपविष्टा बभूविरे ॥ ४६ ॥

तदानीं वेङ्कटाख्यं ते समाहूय गुरूत्तमाः ॥
पदार्थमखिलं देवं तदधीनं विधाय च ॥ ४७ ॥
ततस्तमूचुश्श्रीपादा वेङ्कटाख्यं प्रभूत्तमम् ॥
दूरदेशं गतास्सत्यप्रियास्संस्थानसंयुताः ॥ ४८ ॥
अस्माकं परलोकस्य यात्राकालस्समागतः ॥
तस्मात्सर्वं तवाधीनं जातं विज्ञप्तिपत्रिकाम् ॥ ४९ ॥
लिखित्वा प्रेषय क्षिप्रं श्रीमत्सत्यप्रियान्प्रति ॥
आगताश्चेत्त्वया देयं तेभ्यस्सर्वं त्वयि स्थितम् ॥ ५० ॥
तान्विना सर्वथाऽन्येभ्यो न देयं देवसंयुतम् ॥
इत्युक्त्वा तं प्रति ततश्चक्रुर्मृच्छौचपूर्वकम् ॥ ५१ ॥
ततस्ते सत्यविजयतीर्थास्सिद्धार्थिवत्सरे ॥
चैत्रमासे कृष्णपक्षे चैकादश्यामिनोदये ॥ ५२ ॥
स्नात्वा योगायोपविष्टा लयचिन्तनतत्पराः ॥
भुवि देहं परित्यज्य परं हरिपुरं ययुः ॥ ५३ ॥
स कौण्डिण्यनदीतीरे वेङ्कटप्रभुशेखरः ॥
कारयामास श्रीपादवृन्दावनमनन्यधीः ॥ ५४ ॥
ततः परं स विज्ञप्तिपत्रिकामतिशीघ्रतः ॥
लिखित्वा प्रषयामास श्रीमत्सत्यप्रियान्तिकम् ॥ ५५ ॥
ततस्ते शीघ्रमानीतां विप्रैर्विज्ञप्तिपत्रिकाम् ॥
विलोक्य जग्मुस्त्रिचतुर्योजनानि निरन्तरम् ॥ ५६ ॥
एवं तेऽत्यन्तकष्टेनाभ्येत्य स्वामिवियोगतः ॥
द्वाविंशदिवसे प्राप्तास्त्वारणीं गुरुशेखराः ॥ ५७ ॥
श्रीमत्सत्यप्रियान्दृष्टवा तेभ्यो वेङ्कटनायकः ॥
रामव्यासैस्सहाशेषपदार्थांत्स समार्पयत् ॥ ५८ ॥
ततस्स्नात्वा देवपूजां कृत्वा वृन्दावनान्तिके ॥
चक्रुस्समाराधनानि नित्यं ते दिवसत्रयम् ॥ ५९ ॥

यश्श्रीमद्गुरुराजसत्यविजयश्रीपादयोगादिस-
त्कर्मोद्भूतकथामिमामहरहः प्रातश्शुचिः कीर्तयेत् ॥
सोऽस्मिन्सज्जनसंघकीर्तितगुणो नीतिप्रवीणस्सदा
सद्ब्यासंगरतश्च तत्करुणया योगी भवेत्सर्वदा ॥ ६० ॥

**इति श्रीम......पूर्णबोधगुरुवंशकथाकल्पतरौ सत्यविजय-
श्रीपादवैकुण्ठयात्रावर्णनं नाम चतुर्विंशः शाखासर्गः**



## अथ पञ्चविंशश्शाखासर्गः

ततस्तस्माद्विनिर्गत्य सत्यप्रियमुनीश्वराः ॥
कडपीं ते समेत्याथ तत्रस्थैरतिपूजिताः ॥ १ ॥
ततौ बंकापुरप्रान्ते कृत्वा दिग्विजयं मुदा ॥
राचूरदेशं प्रययुस्संचरन्तस्त्वितस्ततः ॥ २ ॥
कर्णाटकं ततो गत्वा मुरारिप्रमुखैस्तदा ॥
पूजिताश्चक्रिरे वासं श्रीरङ्गे गुरुशेखराः ॥ ३ ॥
राज्यं समर्पितं तेन श्रीपादेभ्योऽतिभक्तितः ॥
ग्रामषट्कं तदा दत्तं शिलाशासनपूर्वकम् ॥ ४ ॥
मुरारिणा पूर्वमेव स्वामिभ्यः प्रार्थना कृता ॥
तैः प्रोक्तं तव तद्राज्यं भवेदिति सुनिश्चितम् ॥ ५ ॥
ततस्ते पूजितास्तत्र सैन्यस्थैरखिलैरपि ॥
फत्तेसिंग–रघोजिभ्यां गजयुग्मं समर्पितम् ॥ ६ ॥
यदा गन्तुं मनश्चक्रे फत्तेसिंगस्तदाऽखिलम् ॥
मुरारिराज्ञे तद्दत्वा स्वदेशं स जगाम ह ॥ ७ ॥
मुरारिस्त्रिचनापल्ल्यां श्रीपादैस्सहितस्तदा ॥
उवास कतिचित्कालं महाविभवपूर्वकम् ॥ ८ ॥
समर्पिता राजमुद्रा श्रीपादेभ्यो मुरारिणा ॥
कृतं द्विजेभ्यश्श्रीपादैर्भूमिदानादिक तदा ॥ ९ ॥

अथ विद्वत्समाजोऽभूच्छीपादानां सभातले ।।
रामानुजेन तत्रैव प्रसंगश्चाभवत्तदा ।। १० ।।
पराजितोऽभूद्गुरुभिस्सभामध्ये स भूसुरः ।।
जयपत्रं ददौ तेभ्यश्शब्दशास्त्रविचक्षणः ।। ११ ।।
अथाययौ महासैन्यसमेतो दक्षिणाधिपः ।।
रुरोध तृचनापल्लीं पुरग्रहणकाङ्क्षया ।। १२ ।।
तदानीं दक्षिणाधीशस्तां रुरोध चमूगणैः ।।
अन्तर्मुरारिराक्रम्य पुरीं तेन युयोध ह ।। १३ ।।
महासैन्यस्थितास्सर्वे शिष्यास्सैन्येशवाक्यतः ।।
श्रीपादानाव्हयामासुर्निरुद्धपुरतो बहिः ।। १४ ।।
ते तस्मान्निर्गताश्चैत्रपञ्चम्यां शुक्लपक्षके ।।
गन्तुं स्थलान्तरं याता महासंस्थानसंयुताः ।। १५ ।।
एवं प्रतिप्रयाणं ते संचरन्तस्त्वितस्ततः ।।
ययुर्मानामधुरिकासमीपे गुरुशेखराः ।। १६ ।।
समीपस्थैस्स्वीयजनैर्याचिता अप्यहर्निशम् ।।
संस्थानदानेऽन्येभ्यस्ते न मनश्चक्रिरे पुरा ।। १७ ।।
शरीरप्रकृतिं ज्ञात्वा व्यत्यस्तां तदनन्तरम् ।।
संस्थानदानेऽथ मनश्चक्रिरे प्रीतिपूर्वकम् ।। १८ ।।
तत्पूर्वमेव राचूरे हर्याचार्या मनोहरे ।।
स्थितास्तेभ्यस्सप्तपुत्रा अभवन्पुण्यशालिनः ।। १९ ।।
तेषां मध्येऽभवन्षष्ठा रामाचार्यास्सुलक्षणाः ।।
सत्यप्रिया अपि तदा देशे तस्मिन्समागताः ।। २० ।।
ततस्तेषां दर्शनार्थं हर्याचार्यास्सहाखिलैः ।।
गुण्डम्यट्कल्लूरपर्यन्तं जग्मुर्भार्यासुतादिभिः ।। २१ ।।
सत्यप्रियाख्यश्रीपादा दृष्टवा तेषां तनूद्भवान् ।।
रामाचार्यान्पटुतरान्स्वीकृत्य समपोषयन् ।। २२ ।।
विवाहं कारयित्वा तान्स्वसमीपे निधाय तान् ।।
पोषयामासुरत्यन्तं संस्थानार्थं गुरूत्तमाः ।। २३ ।।

शब्दशास्त्रादिशास्त्राणि बोधयित्वा ततः परम् ॥
मधुतीर्थमुखोद्गीततीर्थप्रौढान्प्रचक्रिरे ॥ २४ ॥
तेभ्यो बभूवतु.पुत्रावुभौ सर्वेस्सहैव ते ॥
गुरुपादसमीपस्था बभूवुस्सर्वदैव हि ॥ २५ ॥
रामाचार्यान्समीपस्थान्लक्ष्यीकृत्वा तु चेतसा ॥
अन्त्यकाले तु संप्राप्ते तेभ्य एव ददुस्तदा ॥ २६ ॥
ततस्ते भगवत्पादसरोजार्पितचेतसः ॥
इन्द्रियाणि नियम्याथ बाह्यव्यापारवर्जिताः ॥ २७ ॥
प्राणानायम्य वहुधा तानानीय शिरः प्रति ॥
मन्दं मन्दं ब्रह्मरन्ध्रमुपेत्य गुरुशेखराः ॥ २८ ॥
शकेऽब्ध्यर्तुनृपै (१६६४) स्तुल्ये रुधिरोद्गारिवत्सरे ॥
चैत्रशुक्लत्रयोदश्यां वैकुण्ठनगरीं ययुः ॥ २९ ॥
तदानीं मठगास्सर्वे सत्यप्रियगुरोस्तनुम् ॥
कृतमालानदीतीरं प्रति निन्युर्विधानतः ॥ ३० ॥
ततोऽपराण्हसमये कृतमालानदीतटे ॥
श्रीमानामधुरायां तु गुरोर्वृन्दावनं कृतम् ॥ ३१ ॥
अथ श्रीमत्सत्यबोधतीर्थास्स्नात्वा विधानतः ॥
कृत्वा जपादिकं सर्वं पारिव्राजगणाधिपाः ॥ ३२ ॥
अथ देवपुरस्तात्ते उपविष्टा गुरूत्तमाः ॥
वृन्दावने देवपूजां चक्रुर्मण्टपमण्डिते ॥ ३३ ॥
ततो विधानतः कृत्वा समाराधनमन्वहम् ॥
अतोषयन्द्विजश्रेष्ठान्वस्त्राभरणपूर्वकैः ॥ ३४ ॥
अथ प्रतस्थिरे तस्मात्सेतुं गन्तुं तपस्विनः ॥
भास्करग्रहणे प्राप्ते तदर्थं त्वरया गताः ॥ ३५ ॥
सेतुं गत्वा सत्यबोधतीर्थास्स्नात्वा ततः परम् ॥
निरन्तरं देवपूजां चक्रुस्ते विधिपूर्वकम् ॥ ३६ ॥
तदानीं सेतुनृपतेर्दुर्बुद्धिस्तेष्वजायत ॥
धर्मिष्ठस्यापि दुस्संगादकस्मात्कारणान्तरात् ॥ ३७ ॥

स स्वीयसेवकानब्धैस्तीरं द्राक्प्रैषयद्बहून् ॥
तीर्त्वा समागताश्चैते सेतुद्वीपस्थलादिह ॥ ३८ ॥
निर्बन्धं कर्तुमथ तेऽप्यतीत्याब्धिं समागताः ॥
ततस्सेतुपतेर्दूतास्संस्थानं रुरुधुर्भृशम् ॥ ३९ ॥
तदानीं तृचनापल्ल्यां दक्षिणेशेन संयुताः ॥
जानोजिनिंबालकरः कोटं रुध्वा स्थितः किल ॥ ४० ॥
श्रुत्वा श्रीपादशिखरान्भक्त्या विज्ञप्तिपत्रिकाम् ॥
लेखयित्वा स्वभृत्यांस्तु ब्राह्मणैस्सहितांस्तदा ॥ ४१ ॥
प्रेषयित्वा ततश्शीघ्रं तस्माद्रामेश्वरं प्रति ॥
श्रीपादानाव्हयामास ते श्रीपादान्तिकं ययुः ॥ ४२ ॥
दृष्टवा विज्ञप्तिपत्रं ते श्रीपादास्सर्वमादितः ॥
प्रोचुस्स्वकीयवृत्तान्तं श्रुत्वा तेऽत्यन्तकोपतः ॥ ४३ ॥
दृष्टवा सेतुपतेर्दूतान्श्रीपादपरितस्स्थितान् ॥
क्रोधेन ताडयामासुर्वेत्रैर्याम्यपतेर्बलात् ॥ ४४ ॥
तदा सेतुपतिःखिन्नो भूत्वा लज्जासमन्वितः ॥
श्रीपादानर्थयामास क्षम्यतां क्षम्यतामिति ॥ ४५ ॥
तदानीं तृचनापल्लीमहासैन्ये तु दुर्जनाः ॥
अबोधयंस्ते याम्येशं श्रीपादविषयेऽनिशम् ॥ ४६ ॥
मुरारिराजगुरवस्सत्यबोधा गताः किल ॥
प्रैषयन्स मुरारिस्तैस्सह स्वीयं धनं बहु ॥ ४७ ॥
प्राकृताख्यो भीमराजस्स पत्नीमपि तैस्सह ॥
प्रेषयामास सर्वस्वं स्वीयमस्मद्भयाद्ध्रुवम् ॥ ४८ ॥
इति संबोधितः क्षुद्रैर्दक्षिणाधिपतिस्तदा ॥
श्रीसत्यबोधानानेतुं प्रेषयामास सादिनः ॥ ४९ ॥
ततस्ते निर्गतास्तस्मात्सादिनश्शीघ्रगामिनः ॥
श्रीपादान्शीघ्रमानेतुं रामनाथपुरं ययुः ॥ ५० ॥
ततस्ते निर्गतास्तस्मात्तैस्सहैव गुरूत्तमाः ॥
आगतास्त्रिचिनापल्लीं मानपूर्वं निरन्तरम् ॥ ५१ ॥

श्रीपादानागतान्श्रुत्वा दक्षिणाधिपतिस्तदा ॥
पश्चिमे तृचनापल्या रक्षकेषु न्यवेशयत् ॥ ५२ ॥
निर्बन्धमकरोत्तेषां परितस्स्वीयसेवकैः ॥
निंबालकरदूतास्तां वार्तां तस्मै न्यवेदयन् ॥ ५३ ॥
तदा निंबालकारोऽपि रोगेण परिपीडितः ॥
श्रुत्वा श्रीपादवृत्तान्तं चिन्ताक्रान्तो बभूव ह ॥ ५४ ॥
तदा विज्ञापनीपेतां लिखित्वा पत्रिकां स्वकाम् ॥
प्रेषयामास याम्येशं प्रति स्वपरिचारकैः ॥ ५५ ॥
स्वामिनो भिक्षुकास्सर्वजनानां गुरुशेखराः ॥
जगन्मान्याश्च बहुधा पूजिताः प्रभुशेखरैः ॥ ५६ ॥
निर्बन्धितुं न योग्यास्ते निस्स्पृहा युष्मदादिभिः ॥
स्वाधीनानां तु निर्बन्धो वृथैव परिदृश्यते ॥ ५७ ॥
तथाऽपि संशयस्तेषु भवतां यदि दृश्यते ॥
निवेश्यन्तां ममाधीन्ये भवद्भिर्गुरुशेखराः ॥ ५८ ॥
इत्थं स वाचयित्वा तां लिखितां पत्रिकां तदा ॥
उवाच दक्षिणाधीशः कृत्वा शोधं त्यजेदिति ॥ ५९ ॥
तदानीं निर्गतास्तस्माद्यावनाः परिचारकाः ॥
कार्य(य)स्थैर्लेखकैस्साकं श्रीपादान्तिकमाययुः ॥ ६० ॥
अथोपविष्टाः परितस्स्वामिनां मानपूर्वकम् ॥
मठीयानां पदार्थांस्ते मध्ये चैकत्र चक्रिरे ॥ ६१ ॥
तत्रैव मठसंबन्धिपदार्थानखिलानपि ॥
राशिं कृत्वा राजभृत्या ररक्षुः परितोऽनिशम् ॥ ६२ ॥
रामदेवोऽपि तत्रैव वामसेवारतैर्द्विजैः ॥
विविच्य रक्षितस्सम्यग्बालंभट्टाभिधैस्तदा ॥ ६३ ॥
शोधनार्थं यदा सर्वमुद्योगं ते प्रचक्रिरे ॥
तदा चिन्ता कृता देवविषये स्वामिपूर्वकैः ॥ ६४ ॥
अथ निश्चित्य श्रीपादा देवं प्रेषयितुं बहिः ॥
बालंभट्टाभिधानूचुश्चतुर्भिर्ब्राह्मणैर्युतान् ॥ ६५ ॥

देवं प्रगृह्य शीघ्रेण भवद्भिर्ब्राह्मणैस्सह ॥
त्रिकाटपल्लीपर्यन्तं गम्यतामस्मदाज्ञया ॥ ६६ ॥
एवमुक्तास्सत्यबोधैश्चतुर्भिर्ब्राह्मणैस्सह ॥
अन्तर्विविशुरानेतुं देवं तत्करुणाबलात् ॥ ६७ ॥
ततः प्रविश्य देवस्य पेटिकानां तु पञ्चकम् ॥
गृहीत्वैकैकमथ ते म्लेञ्छावर्ताद्बहिर्गताः ॥ ६८ ॥
महिम्ना रामदेवस्य न दृष्टाः परिचारकैः ॥
त्रिकाटपल्लीं जग्मुस्ते बालंभट्टैस्तु संयुताः ॥ ६९ ॥
बृहत्सालग्राममेकं नृसिंहाख्यं प्रगृह्य ते ॥
पूजयन्तस्सत्यबोधा उपवासं प्रचक्रिरे ॥ ७० ॥
ततस्तृतीयदिवसे दक्षिणाधिपतेर्गृहम् ॥
गत्वा निंबालकारस्तं प्रत्युवाच विचक्षणः ॥ ७१ ॥
स्वामिनस्त्रिचिनापल्ल्या निर्गता युष्मदाज्ञया ॥
मयेदानीं समाहूतास्तदर्थं पुनरागताः ॥ ७२ ॥
केषां वाक्यादहो तेषां निर्बन्धो निर्निमित्तकः ॥
कृतो भवद्भिस्तसर्वं ज्ञातुमद्यागतोऽस्म्यहम् ॥ ७३ ॥
निर्बन्धे नाचरिष्यन्ति भोजनं गुरुशेखराः ॥
तस्माद्दिनत्रयं तेषामुपवासोऽभवत्किल ॥ ७४ ॥
विज्ञापनं भवद्भ्योऽन्यो मां विना कः करिष्यति ॥
तस्मात्तदर्थमद्याहमशक्तोऽपि समागतः ॥ ७५ ॥
निर्निमित्तेन भवतां यदि तेष्वस्ति संशयः ॥
तावत्कालं ममाधीन्ये तिष्ठन्तु गुरुशेखराः ॥ ७६ ॥
इति तस्य वचश्श्रुत्वा ताम्रः प्रोवाच तं प्रति ॥
निंबालकर मद्वाक्यं श्रुणु ते प्रोच्यते मया ॥ ७७ ॥
मुरारेर्वित्तमेतेषां समीपेऽस्तीति चारणैः ॥
कीर्तितं तेन निर्बन्धः कृतोऽस्माभिर्जितात्मनाम् ॥ ७८ ॥
उपवासं किमर्थं ते कुर्वन्ति गुरुशेखराः ॥
शोधयित्वाऽखिलं तेभ्यो दास्यते न हि संशयः ॥ ७९ ॥

इत्युक्त्वा दक्षिणेशस्तमानाय्याम्रफलान्यपि ॥
प्रेषयत्स चतुर्भिस्त्वैस्स्वामिभ्यस्स्नेहपूर्वकम् ॥ ८० ॥
तदा निंबालकारोऽपि श्रीपादेभ्यस्स्वसेवकम् ॥
प्रेषयित्वाऽखिलां वार्तां श्रावयामास शीघ्रतः ॥ ८१ ॥
स्वामिभिश्श्रूयतां सर्वं भवद्भिस्तु निरन्तरम् ॥
उपवासं कृतं श्रुत्वा ताम्रोऽयं प्रीतिपूर्वकम् ॥ ८२ ॥
प्रेषयद्वश्चूफलानीमान्यत्युत्तमानि सः ॥
तत्प्रीत्यर्थं पूज्यपादैस्स्वीकार्याणि निवेद्य हि ॥ ८३ ॥
इत्थं श्रावितमाकर्ण्य प्रेषिताम्रफलानि ते ॥
समर्पयित्वा देवाय ब्राह्मणेभ्यो ददुर्मुदा ॥ ८४ ॥
स्वभागं विनिधायाग्रे जपान्ते गुरुशेखराः ॥
स्वीकर्तुमथ तानूचुरस्मदीयं वचः प्रभोः ॥ ८५ ॥
वाच्यं वयं त्वया पोष्या इति सन्न्यासिशेखराः ॥
ताननुज्ञाप्य पश्चात्ते तत्रोषुर्निखिलैस्सह ॥ ८६ ॥
ततस्ते शोधनं चक्रुर्ग्रन्थिभारान्पृथक्पृथक् ॥
दृष्ट्वा स्वर्णमयाशेषपदार्थान्घटपूर्वकान् ॥ ८७ ॥
स्वर्णशृङ्खोपेतदोला–पीठ–वेत्रमुखाखिलान् ॥
अनर्घ्यरत्नखचितानेकालङ्कारशेखरान् ॥ ८८ ॥
नानापदार्थदातॄणां दृष्ट्वा नामानि लेखकाः ॥
विस्मितास्सत्वरं तेषां लिखित्वा मौल्यपूर्वकम् ॥ ८९ ॥
तदधो दातृनामानि लिखित्वा तदनन्तरम् ॥
राजमुद्राचिन्हितानि दृष्ट्वा पत्राणि संभ्रमात् ॥ ९० ॥
सर्वे समुत्थिता भूत्वा ते लेखकमुखास्तदा ॥
संप्रदायानुसारेण वन्दनं चक्रिरे क्रमात् ॥ ९१ ॥
ततश्श्रीपादसामीप्यं गत्वा लेखकपूर्वकाः ॥
अपृच्छंस्ते गुरुश्रेष्ठान्पत्रिकाऽऽगमनक्रमम् ॥ ९२ ॥
सत्याभिनवतीर्थानां कथामुक्त्वा गुरूत्तमाः ॥
राज्ञार्पितं महापत्रं दर्शयामासुरादरात् ॥ ९३ ॥

तथा सत्यप्रियाख्येभ्यो दक्षिणाधिपतिस्स्वयम् ॥
दृष्ट्वा महत्त्वं प्रददौ स्वमुद्राङ्कितपत्रिकाम् ॥ ९४ ॥
तस्माद्वयं भिक्षुका अप्यशेषजनपूजिताः ॥
निश्शङ्कास्सर्वदेशेषु संचारं कर्तुमागताः ॥ ९५ ॥
इदानीं लेखका यूयं गृहीत्वा पत्रिका इमाः ॥
दर्शयित्वा यमेशाय कुरुध्वं कार्यसाधनम् ॥ ९६ ॥
इत्युक्त्वा प्रददुस्तेभ्यो राजमुद्रासुचिन्हिताः ॥
पत्रिकास्ते गृहीत्वाऽथ सर्वे लेखकपूर्वकाः ॥ ९७ ॥
एवं नवाहपर्यन्तं शोधयित्वा निरन्तरम् ॥
निस्संशयास्ते कायस्था जग्मुर्याम्यांधिपान्तिकम् ॥ ९८ ॥
स दृष्ट्वा नीतिसंपन्नस्तदानीं स्वार्यपत्रिकाः ॥
निष्कलङ्कान्गुरून्श्रुत्वा पश्चात्तापयुतोऽभवत् ॥ ९९ ॥
ततो निंबालकारं स समाहूय गुरूत्तमान् ॥
प्रार्थयित्वा निजगृहे पूजयस्वेत्युवाच ह ॥ १०० ॥
ततो निंबालकारोऽतिहर्षेणागत्य सत्वरम् ॥
श्रीपादान्प्रार्थयित्वा तैस्साकं निजगृहं ययौ ॥ १०१ ॥
ततस्त्रिकाटपल्लीं ते सत्यबोधमुनीश्वराः ॥
प्रेषयित्वा द्विजश्रेष्ठान्बालंभट्टाभिधैस्सह ॥ १०२ ॥
तथा बहुविधैर्लोकैर्महाविभवपूर्वकम् ॥
आनाय्य राम–व्यासादीन्पूजयामासुरादरात् ॥ १०३ ॥
समायाते रामदेवे वाद्यवैभवसंयुताः ॥
अभिगम्य गुरुश्रेष्ठास्सर्वैस्सह समानयन् ॥ १०४ ॥
ते समाराधनं चक्रुस्ततस्तेभ्यो निरन्तरम् ॥
सेनायां संस्थिता लोकाश्श्रीपादेभ्योऽतिभक्तितः ॥ १०५ ॥
ततो निंबालकारं स कृत्वा माध्यस्थ्यकर्मणि ॥
जग्राह त्रिचनापल्लीं मुरारिस्तु बहिर्गतः ॥ १०६ ॥
ततो याम्याधिपस्स्वीयपत्रिकां मुद्रयाऽङ्किताम् ॥
कारयित्वा सत्यबोधश्रीपादेभ्यो ददौ मुदा ॥ १०७ ॥

ततो मुरारिः प्रययौ स्वदेशं प्रति सत्वरम् ॥
ततो निंबालकारस्तं प्रेषयित्वा समागतः ॥ १०८ ॥
यदा पुरा सत्यबोधतीर्थास्सैन्यं समागताः ॥
निर्वन्धन तदा वेदव्यासपूर्वकसंपुटम् ॥ १०९ ॥
स्वर्णात्मकं बृहद्वज्रखचितं ब्राह्मणैस्सह ॥
निंबालकरसामीप्यं प्रेषितं तैर्गुरूत्तमैः ॥ ११० ॥
तत्तत्रैव स्थितं तावत्तदानीं बहुभिर्दिनैः ॥
संपुटं तत्समानीय श्रीपादपुरतो न्यधात् ॥ १११ ॥
ततो निंबालकारस्तैरनुज्ञप्तो गुरूत्तमैः ॥
तस्माद्विनिर्गतस्स्वीयं देशं प्रति जगाम ह ॥ ११२ ॥
सत्यबोधतीर्थराजराजभीतिसंभवां
सत्कथां निरन्तरं सभासु यः प्रकीर्तयेत् ॥
तस्य राजभीतिपूर्वभीतयो भवन्ति नो
तत्प्रसादतो मनोरथाश्च संभवन्ति हि ॥ ११३ ॥

**इति श्रीम.....पूर्णबोधगुरुवंशकथाकल्पतरौ कर्णाटके श्रीसत्यबोधश्रीपादभयपरिहारकथावर्णनं नाम पञ्चविंशः शाखासर्गः**



## अथ षड्विंशः शाखासर्गः

ततश्श्रीमत्सत्यबोधतीर्थास्तस्माद्विनिर्गताः ॥
पदार्थैर्निखिलैर्युक्ता जग्मुस्तंजावरं प्रति ॥ १ ॥
सेतुगोसाविना साकं विरोधस्समजायत ॥
सोऽकल्पयत्प्रसंगार्थं स्वामिभिश्श्यामशास्त्रिणः ॥ २ ॥
स तु राजसभामध्ये स्वप्रशंसां विधाय च ॥
कृत्वा प्रसंगं श्रीपादैश्शब्दशास्त्रे पराजितः ॥ ३ ॥
श्रुत्वा श्रीपादसामर्थ्यं राजाऽपि गुरुशेखरान् ॥
अत्यन्तं पूजयामास समाराधनपूर्वकैः ॥ ४ ॥

ततस्स सेतुगोसावी समागत्य मठं प्रति ॥
श्रीपादान्गृहमानीय पूजयामास भक्तितः ॥ ५ ॥
ततस्तस्माद्विनिर्गत्य कुम्भघोणं प्रपेदिरे ॥
वादीन्द्र–वसुधेन्द्राभ्यां सहाभूत्कलहो महान् ॥ ६ ॥
तत्र विद्वन्मण्डलं ते भेदयित्वा निरन्तरम् ॥
व्याख्यानावसरे सर्वांश्चक्रुर्निस्संशयांस्तदा ॥ ७ ॥
मठं निर्माय धैर्येण राज्ञा सम्यक्प्रपूजिताः ॥
तस्माद्विनिर्गताः प्रापुष्षडरण्याख्यपत्तनम् ॥ ८ ॥
तत्र कृष्णाजिपंतेन पूजिताः परमादरात् ॥
तस्माद्विनिर्गता जग्मुर्वैकुण्ठाद्रिं गुरूत्तमाः ॥ ९ ॥
ततः कडपि–कन्नोलि–गद्वालादीनुपेत्य ते ॥
श्रीभाग्यनगरं गत्वा तत्रत्यैरतिपूजिताः ॥ १० ॥
ततो गोदावरीं जग्मुसूर्यराज्ञा गजोऽर्पितः ॥
गुंडमट्कल्लूरराज्ञाऽपि गजस्तेभ्यस्समर्पितः ॥ ११ ॥
राचूरमेत्य तदनु नानामुख्यैस्सुपूजिताः ॥
क्रमाद्धरिहरक्षेत्रं संचरन्तस्समागताः ॥ १२ ॥
महासमाराधनं ते कृत्वा श्रीगुरुशेखराः ॥
सार्धत्रिमासपर्यन्तं तत्र वासं प्रचक्रिरे ॥ १३ ॥
ततस्तु खंण्डेराजेन प्रार्थितास्ते विनिर्गताः ॥
सवनाख्यपुरं प्राप्तुं वरदातीरमागताः ॥ १४ ॥
सर्वजिद्वत्सराषाढशुक्लस्थनवमीदिने ॥
श्रीपादागमनं सर्वैस्सवनाख्यपुरे श्रुतम् ॥ १५ ॥
ततः प्रभातसमये खंडेराजमुखास्तदा ॥
विधाय नित्यकर्माणि विद्वद्भिर्निखिलैस्सह ॥ १६ ॥

समस्तवाद्यविभवसंयुक्ताः प्रभुशेखराः ॥
श्रीपादानागताञ्श्रुत्वा सर्वेऽप्यभिययुः पुरात् ॥ १७ ॥
अथ समस्तजना निजमन्दिरे वसनपूर्वकभूषणभूषिताः ॥
सवितरि स्वकरैरुदिते तदा गुरुवरांस्तरसाऽभिययुः पुरात् ॥ १८ ॥

गुरुवरागमसंभ्रमनिर्गतैः पुरजनैः परिकीर्तितवार्तया ॥
निखिलजातिभवाः पुरुषास्त्रियोऽप्यभिगताः
पथि तानभिवीक्षितुम् ॥ १९ ॥
यवनपूर्वकमुख्याजना अपि स्वनिलयोपरि कोटतटोपरि ॥
निजजनैस्सहिताः परिचारकैर्गुरुवरानवलोकयितुं
स्थिताः ॥ २० ॥
करिगणाः पथि वाजिगणैस्सह प्रबलवारणपैः परिलालिताः ॥
ध्वजधरैरपि वीरवरैर्युता गुरुवरानभिगम्य
बहिस्स्थिताः ॥ २१ ॥
पुरपतिर्निजहर्म्यसुसंस्थितः परिचरामलचामरवीजितः ॥
गुरुवरानवलोक्य गृहं विशेदि (१) ति मतिं स विधाय
न चोत्थितः ॥ २२ ॥
तदनु सर्वजनाः पुरतः पुरन्दरदिगुच्चतरावनिमेत्य ते
गुरुवरान्वरदातटसंस्थितान् समभियातजनैः
परिशुश्रुवुः ॥ २३ ॥
ततः क्रोशमात्रं गताः खेटमेत्य
स्थिताः पूज्यपादागमस्तत्र यावत् ॥
भवेत्तावदाबाल–वृद्धास्समस्ता
गुरूणां कथासक्तचित्ता बभूवुः ॥ २४ ॥

---

पञ्चवाद्यपु समस्तवाद्यान्यागतानि । पञ्च वाद्यानि मुखाहत–नखाहत–करतलाहत–काष्ठाहत–परस्पराहतानि । एतेषु मुखाहतानि शङ्खादीनि, नखाहतानि वीणादीनि करतलाहतानि, मृदङ्गानि काष्ठाहतानि भेर्यादीनि परस्पराहतानि कांस्यतालादीनि ॥

दिवानायके पश्चिमाशां प्रयाते
जवेनाखिलं जाप्यपूर्वं समाप्य ।।
सुवाद्यैर्द्विजाद्यैर्युतास्सत्यबोधाः
पुरस्थास्स्थिता यत्र तत्राययुस्ते ।। २५ ।।
तदा स्वामिवर्याञ्जनौघैस्सहैवा–
गतान्वीक्ष्य सर्वे महाहर्षयुक्ताः ।।
समुत्थाव तेषां समीपं समेत्य
फलादीन्पुरस्तान्निधाय प्रणेमुः ।। २६ ।।
पुराणा नवीनास्समस्ता मिलित्वा
गुरूणां समन्तात्तदान्दोलिकायाः ।।
समीपे तु यातास्तदा पाण्डुरङ्गी
नृसिंहाग्रजाद्यैर्द्विजेन्द्रैस्सहैव ।। २७ ।।
तदा रामचन्द्राव्हयाचार्यवर्या–
स्समेत्योच्चभूमिं च बंकापुरस्थाः ।।
प्रणम्यानुयाता गुरूणां तु पश्चा–
त्तथाऽन्येऽपि विद्वज्जनाद्यास्समस्ताः ।। २९ ।।
ततस्सत्यबोधास्समेत्योच्चभूमिं
समस्तैस्तदा प्रार्थिताः कुञ्जरेन्द्रम् ।।
समारुह्य कोलाव्हयाचार्यवर्यै–
र्लसच्चामरासेविता आगतास्ते ।। २९ ।।
ततः करीन्द्रोपरि सन्निविष्टा समागतास्ते नगरं प्रवेष्टुम् ।।
तदा पुरान्तर्निलयाश्च भूमिर्नरैर्युता
दृष्टिपथं न याताः ।। ३० ।।
ततस्तु भेरीमुखवाद्यशेखरैस्सुघोषिता दक्षिणनायकार्पितैः ।।
लसत्पताकानिकरैः पुरोगतैस्सुशोभितास्संविविशुः
पुरं तदा ।। ३१ ।।

पुरस्थनारी–नरवर्यवन्दितास्सुवासिनीभिर्निजमन्दिराद्बहिः ॥
लाजाक्षतार्तिक्यमुखैः पृथक्पृथक् प्रपूजितास्ते नितरां बभूविरे ॥३२॥
ततः खण्डेराजगेहं समेत्य श्रीमार्तण्डेऽस्ताद्रिकूटं प्रयाते ॥
शुण्डादण्डप्रोल्लसद्दन्तिवर्यस्तस्थौ गूढप्रेरितो हस्तिपेन ॥ ३३ ॥
अथ प्रयाताः प्रभुवर्यमन्दिरादार्तिक्यहस्तास्तरसा पतिव्रताः ॥
दृष्ट्वा गजस्थानपि सत्यबोधास्ताश्चक्रुरार्तिक्यमतीवतेभ्यः ॥३४॥
अथावतीर्य वारणात्ससंभ्रमं गुरूत्तमाः ॥
प्रवेशमाशु चक्रिरे तदीयमन्दिरं शुभम् ॥ ३५ ॥
अथ तत्सभां विविधलोकसंयुतां
वरचूतपल्लवदलैर्विराजिताम् ॥
गृहमण्डनां समधिगम्य ते मुदा
गुरवो निषेदुरतुलासने तदा ॥ ३६ ॥
आनन्दाख्यश्श्रीमतां पादयुग्मं प्रक्षाल्याथाऽत्यन्तभक्त्या गुरुभ्यः ॥
ऊर्णावस्त्रं चार्पयित्वा तदङ्घ्र्योः कृत्वार्तिक्यं
दण्डवत्त्रिर्ननाम ॥ ३७ ॥
स्नात्वा रामं पूजयित्वा सभायां दत्वा तीर्थं सर्वलोकेभ्य एव ॥
भुक्त्वा विद्वद्वृन्दमध्ये मुनीन्द्रास्तत्रैवोषुस्ते निशायां सुखेन ॥ ३८ ॥
ततः परस्मिन्दिवसेऽपि तत्र श्रीसत्यबोधाः परमादरेण ॥
कृत्वाऽऽह्निकं विप्रवरैस्सहैव भुक्त्वा सभायामवसन्सुखेन ॥ ३९ ॥
ततस्तृतीये हरिवासरे तु प्राप्ते तदानीं गुरुसत्यबोधाः ॥
स्नात्वा जपान्ते वरदेवतार्चां चक्रुस्सभायां सचिवोत्तमस्या ॥ ४० ॥
तस्मिन् दिने श्रीगुरुसत्यबोधास्समस्तलोकान्कृपया निरीक्ष्य ॥
ददुर्निशायां वरतीर्थ–मन्त्र–मुद्रादिकं तेन निशा गता सा ॥ ४१ ॥
द्वादश्यां मिहिरोदये गुरुवरास्त्वामन्त्रणाख्योत्सवं कृत्वा
श्रीगुरुपादुकार्चनमघो स्नात्वा जपादीनपि ॥
कृत्वा श्रीरघुपुङ्गवार्चनम शेषज्ञानिसन्मण्डले
भुक्त्वा राजसभासु रात्रिसमये दोलार्चनं चक्रिरे ॥ ४२ ॥

अथ ते प्रभातसमये मदने दिवसे विधाय गुरुपादुकयोः ॥
परिपूजनं तदनु तस्य गृह्याद्घटिकारगेहगमनं विदधुः ॥ ४३ ॥
अथ प्रयातास्सचिवेन साकं गोपालकृष्णाव्हयनायकस्य ॥
गृहं तदा ते शिबिकाधिरूढाः पदे पदे लोकनता बभूवुः ॥४४॥
कान्ता तस्यागता द्राग् युवतिजनगणैस्संयुतार्तिक्यहस्ता
श्रीपादेष्वागतेषु स्वभवनपुरतोऽपूजयत्साऽक्षताद्यैः ॥
लाजावृष्टिस्तदाऽऽसीद्गुरुवरशिबिकामुर्ध्नि तस्यास्ततस्ते
श्रीमन्तश्चावरुह्योदवसितमविशन्पुण्यकीर्तेः परं तत् ॥ ४५ ॥

प्रविश्य गेहं गुरवो वरासने
तदा निविष्टाः परितोऽखिलैस्सह ॥
गोपालकृष्णोऽथ तदीयपादौ
प्रक्षाल्य भार्यासहितोऽर्चयत्तदा ॥ ४६ ॥

तस्मिन्दिने तेन गुरूत्तमेभ्यः कृतं समारधनमादरेण ॥
श्रीपादवर्याः परिपूज्य देवं
भुक्त्वाऽखिलैर्वासमथ प्रचक्रुः ॥ ४७ ॥

ततस्तु लोका गुरुशेखराणामाज्ञां गृहीत्वा क्रमशस्समस्ताः ॥
स्वं स्वं स्थलं जग्मुरथो पुरस्था-
स्तदङ्घ्रिसेवानिरता बभूवुः ॥ ४८ ॥

संपाद्य कार्यं विविधैरुपायैः
श्रीपादवर्याः प्रभुशेखरेभ्यः ॥
तत्रैव तत्पुण्यवशात्तु चातु-
र्मास्योपवेशं खलु कर्तुमैच्छन् ॥ ४९ ॥

तदनु मार्गदिने गुरुशेखरा विविधमण्डपपूर्वकसाधनैः ॥
रघुपतिं परिपूज्य तदाऽभव-
न्नभसि ते क्षुरकर्मयुताः किल ॥ ५० ॥

स्नात्वा पश्चाज्जपान्ते रघुपतिपुरतश्चोपविश्य द्विजेन्द्रै-
र्मन्त्रिश्रेष्ठादिलोकैरतिकुशलतरैश्शोभितायां सभायाम् ॥

संकल्प्य प्रार्थितास्तैस्सवणपुरगतैरादरात्सत्यबोधा–
श्चातुर्मास्योपवेशं यतिकुलतिलकाश्चक्रिरे रात्रिकाले ॥ ५१ ॥
**इति श्रीमद्वेणुपल्ली . . . . . पूर्णबोधगुरुवंशकथाकल्पतरौ**
**श्रीसत्यबोधश्रीपादचरिते सवणूरनिवासकथाकथनं नाम**
**षड्विंशशाखासर्गः ॥**

---

## सप्तविंशः शाखासर्गः

अथ गुरुप्रवरास्समवेक्ष्य ते
शुभतरां सवनाख्यपुरीं तदा ॥
इह वसे (१) द्रघुपुङ्गवपूजन–
प्रवचनैर्नव पञ्च च वत्सरान् ॥ १ ॥
इति विधाय हृदा गुरुशेखराः
प्रतिदिनं प्रविधाय जपादिकान् ॥
सकलशिष्यजनान्समबोधयन्
प्रमतिशास्त्रमतीव सभातले ॥ २ ॥
तदनु ते रघुपूङ्गवपूजनं
प्रतिदिनं नितरां परिचक्रिरे ॥
विविधसत्कुसुमैस्तुलसीदलैः
फलपदार्थनिवेदनपूर्वकैः ॥ ३ ॥
स सचिवोऽपचितिं क्षितिजापतेः
प्रतिदिनं ससुतस्समकारयत् ॥
गुरुवरैर्वरसूक्ष्मतराम्बरैः
कनकपुष्पविचित्रवरासनैः ॥ ४ ॥
समायाते नवरात्रोत्सवेऽथ
समागतास्सर्वदेशस्थलोकाः ॥
महोत्सवं द्रष्टुकामाः पुरी सा
जनैर्लोलैस्संकुला शोभिताऽभूत् ॥ ५ ॥

गलगलीमुद्गलाचार्याः कृष्णातीरात्समागताः ॥
गार्लपाडास्तथा श्रीनिवासाचार्यास्समागताः ॥ ६ ॥
तद्देशस्थाः पांडुरंगीनृसिंहाचार्यशेखराः ॥
अग्रजाख्याश्च मन्नारीश्रीनिवासार्यपूर्वकाः ॥ ७ ॥
बंकापुरात्समायाता रामचन्द्राख्यभूसुराः ॥
रघुनाथाभिधाचार्यास्सत्यनाथकुलोद्भवाः ॥ ८ ॥
यदुपत्याचार्यवंशस्थाश्श्रीपत्याचार्यकोविदाः ॥
तथैव चोम्रजींकृष्णाचार्याश्शिष्यैस्सहागताः ॥ ९ ॥
काञ्चीक्षेत्रात्समायाता व्याससंज्ञोपनामकाः ॥
श्रीनिवासाभिधाचार्यास्सत्यपूर्णपदाश्रयाः ॥ १० ॥
चतुर्दिक्षु स्थिताश्चापि नानाशास्त्रसुपारगाः ॥
महान्तश्च समायाता विद्वांसः परमादरात् ॥ ११ ॥
नानादेशात्समायातास्तथैव प्रभुशेखराः ॥
सीतापतेर्दर्शनार्थं सवणाख्यपुरं प्रति ॥ १२ ॥

ततस्तु देवार्चनदर्शनार्थं
भित्वा सुभित्तिं वरमन्दिरस्य ॥
द्वारद्वयं लोकगमागमार्थं
चक्रुर्गवाक्षौ हरिदर्शनार्थम् ॥ १३ ॥
ततश्च मृद्भिः परिपूर्य चाङ्गणं
गृहं प्रचक्रुर्वरवृष्टिभीतितः ॥
गृहं समस्तं नवचूर्णचर्चितं
सुरक्तमृत्कल्कविचित्रितं तदा ॥ १४ ॥

द्वारपालप्रमुखैर्द्विजसंघैश्चारुमण्टपसुबन्धने कृते ॥
शोभिते सुकदलीतरुसंघैश्चूतपल्लवसुतोरणमुख्यैः ॥ १५ ॥
नारिकेलमुखसर्वफलौघालङ्कृते ऽतिविशदे मनोहरे ॥
मण्टपे रजतमण्टपं हरेस्स्थापितं तदनुदेवसेवकैः ॥ १६ ॥

ब्राह्मे मुहूर्ते गुरुसत्यबोधा

उत्थाय शय्यासुतले निविष्टाः ॥

हृदम्बरे राघवदिव्यरूपं

ध्यात्वा भुवं प्रार्थ्य बहिः प्रतस्थुः ॥ १७ ॥

नता मठीयैर्गुरुसत्यबोधा

गत्वा बहिर्देशमथो विधानतः ॥

प्रक्षाल्य वक्त्रं तुलसीं च नत्वा

धृतोर्ध्वपुण्ड्रप्रमुखा बभूविरे ॥ १८ ॥

ततस्तु पारायणमादरात्तदा

प्रभातकाले विविधं विधाय च ॥

समस्तलोकैः प्रणताः क्षणे क्षणे

समागतैस्ते नितरां विरेजिरे ॥ १९ ॥

समाप्य पारायणमाशु सर्वमामन्त्रणाख्योत्सवमार्यक्लृप्तम् ॥

चिकीर्षवस्तेऽथ रघूत्तमस्य मुदोपविष्टाः पुरतस्तु तस्य ॥ २० ॥

यदाऽऽमन्त्रणोख्योत्सवार्थं निविष्टा-

स्तदा सर्ववादित्रघोषो बभूव ॥

तदाकर्ण्य सर्वलोकास्समेत्य

प्रहृष्टाश्च दृष्ट्वा कृतार्था बभूवुः ॥ २१ ॥

विज्ञाप्य देवाय गुरूत्तमास्ते

प्रभातकाले दिवसे तु तस्मिन् ॥

देवं समाराधयितुं तदीय-

क्षेत्रप्रसादानभिवन्द्य नेमुः ॥ २२ ॥

यदामन्त्रणाख्योत्सवप्रवृत्ति-

स्तदानीं बहिर्विप्रवर्यैस्सभायाम् ॥

विचित्रासने रौप्यपीठे तु सत्य-

प्रियश्रीगुरोः पादुके आदधे सः ॥ २३ ॥

तदानीं सुवर्णातपत्रं सुमुक्ता–
लसल्लम्बमालौघयुक्तं सुदण्डम् ॥
निधाय द्वयोर्मध्यदेशे सुपीठे
सपर्यानुकूलं प्रचक्रे द्विजेन्द्रः ॥ २४ ॥
ततः पाठपीठद्वये रत्नमाला–
द्वयं रत्नपुष्पद्वयं पीठमेर्वोः ॥
द्वयोर्भूषणार्थं निधाय द्विजेन्द्रो
ददौ चामरे वीजितुं मुख्ययोस्ते ॥ २५ ॥
तदनु ते बहिरेत्य सभातले
वरवधू–नरशेखरसंकुले ॥
स्वगुरुपादुकयोः परिवर्तनै–
स्सह नमस्करणं परिचक्रिरे ॥ २६ ॥
ततः पादुकाग्रे निविष्टास्समन्ता–
द्विपश्चिद्वरैस्संस्थितैस्सेविताश्च ॥
सुमन्त्राक्षतैर्मुद्रितस्वर्णनिष्कै–
र्गुरोः पादुकायुग्ममापूजयंस्ते ॥ २७ ॥
निवेदयित्वा वरनारिकेलफलादिकं चार्तिकयुग्ममार्याः ॥
तत्कीर्तनादिश्रवणं विधाय ददुः प्रसादं वरमन्त्रसारम् ॥ २८ ॥
ततस्तेऽन्तस्स्थित्वा रहसि वरशिष्यैस्सह तदा
समालोक्य व्याख्याविहितमलिखन्ग्रन्थनिचयम् ॥
मुदा स्नानं कृत्वा बुधनिकरमध्ये गुरुवराः
पुराणव्याजेन प्रणवमुखमन्त्रौघमजपन् ॥ २९ ॥
तत्पूर्वमेव संस्नात्वा वाम–दक्षिणसेवकौ ॥
श्रीपाददेवपूजार्थमनुकूलं प्रचक्रतुः ॥ ३० ॥
देवार्हासनमास्तीर्य छत्रचामरपूर्वकैः ॥
देवपीठमलङ्कृत्य स्वर्णपीठं निधाय तौ ॥ ३१ ॥
स्वर्णात्मकं कीरषट्कं रत्नपक्षविराजितम् ॥
स्थापयामासतुः पीठकोटयोः पार्श्वयोर्द्वयोः ॥ ३२ ॥

देवपीठात्पुरः पीठे मञ्जूषापञ्चकं तदा ॥
बादरायणमुख्यानां ताभ्यां संस्थापितं तदा ॥ ३३ ॥
वामसेवारतैस्स्वामिवामभागेऽतिशोभने ॥
कृष्णद्वैपायनानां तु मण्डितं देवतार्चनम् ॥ ३४ ॥
दक्षिणसेवानिरताभिनवाचार्यैस्स्वाग्रे रघुपतिवामे ॥
मुख्यप्राण–खगादिप्रतिमा न्यस्ताः पात्रविशेषे चाधः ॥ ३५ ॥
तत्पुरस्तात्तु श्रीपादवामभागे मनोहरे ॥
स्वर्णकुम्भादिकलशस्थापनं तैः कृतं तदा ॥ ३६ ॥
जपान्ते निर्माल्यं सपदि परिहृत्यामलधिय–
स्सुरत्नैर्व्यासादीन्विधिवदभिषिक्तान्विदधिरे ॥
तदन्ते ऋग्भाष्यप्रमुखनिखिलग्रन्थनिचयः
क्रमाच्छिष्येभ्यस्तैर्विधिवदुपदिष्टः प्रतिदिनम् ॥ ३७ ॥
पयःपूर्णशङ्खेन कूर्माभिषेके कृते स्वर्णपात्रे सत्यबोधैः ॥
स बभ्राम कूर्मः पुनस्तं प्रगृह्याभिषेकं प्रचक्रुः पुनस्ते तथैव॥३८॥
ततस्समुत्थाय रघूत्तमस्य गत्वा समीपं विधिवत्प्रणम्य ॥
व्याघ्रासने तत्पुरतो निविष्टा बभूविरे पूजयितुं रमेशम् ॥ ३९ ॥
ततस्तु विप्रा रघुपुङ्गवं तं संप्रार्थयित्वा वरपद्यपूर्वैः ॥
ऋगादिवेदत्रितयैस्तदानीं पारायणं देवपुरः प्रचक्रुः ॥ ४० ॥
कृत्वा न्यासादिकं ते तदनु गुरुवरा रौप्यसन्मण्डपस्थे
पीठे तस्योर्ध्वभागस्थितकुशलकृतस्वर्णपीठस्य दक्षे ॥
भागेऽथो दिग्जयाख्यं रघुकुलतिलकं स्थापयित्वाऽथ पीठ–
मध्ये श्रीमूलरामं तदनु जनकजां वामभागे तु तस्य ॥ ४१ ॥
मध्यै पीठे स्थापयामासुरार्यास्त्वक्षय्येतं दक्षिणावर्तशङ्खम् ॥
आद्ये पीठे संपुटाद्वंशरामं दक्षे वामे विठ्ठलं च प्रसन्नम् ॥ ४२ ॥
बृहत्संपुटतः पश्चान्मध्ये विठ्ठल–रामयोः ॥
कृष्णद्वैपायनव्याससंपुटं स्थापितं तदा ॥ ४३ ॥
ततः कलशमण्डले विविधतीर्थतोयान्विते
हृदैकशतरूपिणं कलशदेवमावाह्य ते ॥

सुगन्धतुलसीदलैः फलनिवेदनाद्यैरलं
सुधूपनिकरादिभिः कलशपूजनं चक्रिरे ॥ ४४ ॥
ततस्तु देवाभिमुखा निजाग्रे निधाय तोयेन सुपूर्य शङ्खम् ॥
ते पञ्चपात्राण्यपि पूजयित्वा पीठस्य पूजां विधिवत्प्रचक्रुः ॥ ४५ ॥
ततः पुनर्न्यासमुखान्विधाय ते ध्यात्वा रघुश्रेष्ठमुखान्हृदम्बरे ॥
पीठे तदीयप्रतिमासु भक्तितस्त्वावाहयामासुरलं सभूमिजान् ॥४६॥
ततः क्रमादर्घ्यमुखान्समर्प्य पुंसूक्तमुख्यैरपि चाभ्यषिञ्चन् ॥
प्रदर्शयित्वा स्वकरेण वेदव्यासान्सुपीठे व्यनिवेशयंस्ते ॥ ४७ ॥
कृष्णद्वैपायनैः पूर्वं कल्पितो बादरायणः ॥
स्नानपात्रे तदा स्नातस्स्थापितश्चाणुसंपुटे ॥ ४८ ॥
समर्प्य गन्धं रघुवीरमुख्यपादेषु पश्चात्तुलसीदलानि ॥
प्राचीनरीत्याऽर्घ्यं च सप्तमाला यथेष्टमालाश्च समार्पयंस्ते ॥४९॥
ततस्तु बद्ध्वा करवीरपूर्वसुपुष्पमाला हरिमण्डपे ते ॥
अनेकरत्नाभरणैरनर्घ्यैरपूजयन्देवमगाधबोधाः ॥ ५० ॥
विचित्ररत्नैर्विविधैस्सदम्बरैरलङ्कृतं राजतदिव्यमण्टपम् ॥
सुपुष्पमालाभिरलङ्कृतं शुभं बभौ विमानं खलु पुष्पकं यथा ॥ ५१ ॥
अथोपविष्टा भगवत्पुरस्तान्नाम्नां सहस्रैस्तुलसीदलानि ॥
समार्पयंस्ते रघुपुङ्गवस्य पादारविन्दे हृदि मस्तके च ॥ ५२ ॥
ततः परं श्रीपरमस्य विष्णोर्नाम्नां सहस्रैर्वरमल्लिकायाः ॥
सेवन्तिकायाः कुसुमानि सम्यक्समार्पयंस्ते गुरुसत्यबोधाः ॥ ५३ ॥
कमलैश्चम्पककुसुमैः कण्टक–सेवन्तिकाभिश्च ॥
कुसुमैरभ्यर्च्य रघुपं न तृप्तिमापुर्गुरुश्रेष्ठाः ॥ ५४ ॥
नन्द्यावर्तैः केतकीभिर्बिल्व–चूतसुपल्लवैः ॥
दूर्वाङ्कुरैस्सत्यबोधा राघवं समपूजयन् ॥ ५५ ॥
कृष्णाजिपंतार्पितदिव्यरत्नरघूत्तमं लक्ष्मण–जानकीतम् ॥
पीठे तु मध्ये व्यनिवेशयंस्ते विभूषणार्थं तरलान्तरस्थम् ॥ ५६ ॥
अथावरणसंस्थितान्परिचरैस्समेतांस्तथा
स वाहनवरायुधान् दिगधिपान्सभार्यांस्तदा ॥

पुरन्दरमुखानलं रघुपतेः पदं वीक्षितुं
स्वमण्डलसमागतान्नमनपूर्वकं तेऽर्चयन् ॥ ५७ ॥
ताम्रादिपात्रेषु धृतं बृहत्सु प्रपूर्य देवोभयपार्श्वयोश्च ॥
प्रज्वाल्य दीपान्परमप्रकाशान्समार्पयन्केचन भक्तियुक्ताः ॥ ५८॥
बहिस्तदा दीपमहोत्सवश्च कृतस्सभायां रघुवीरपार्श्वे ॥
बभ्राम चक्राकृतिदीपसंघस्तदीयपूजासमयेऽथ नित्यम् ॥ ५९ ॥
प्रथमधूपविधौ गुरुशेखरैर्वररघूद्भवनाथपुरःकृते ॥
सकलवाद्यसमृद्धमहाध्वनिस्सवणसंज्ञपुराद्वहिरप्यगात् ॥ ६० ॥
अथो गायकास्ते मुदा तालहस्ता महाहर्षयुक्ताः कृपाब्धेः पुरस्तात् ॥
तदा रामचन्द्रस्य गानं प्रचक्रुस्तदीयान्गुणान्कीर्तयन्तस्सुखेन ॥६१॥
ततोऽभवद्द्वारपालप्रताडितजनध्वनिः ॥
नैवेद्यार्थं बहिस्तस्माल्लोकनिष्कासने कृते ॥ ६२ ॥
द्वारपालकरताडितलोकदेहसंभवमहाकटुशब्दैः ॥
तद्गृहं सपदि संकुलमासीद्वस्त्रदामवरताडनशब्दैः ॥ ६३ ॥
निष्कासितेष्वाश्वखिलेषु तेषु तैर्द्वारपालैर्बहिरीशगेहात् ॥
सम्मार्जिता भूर्वररङ्गबल्ल्या स्वलङ्कृता स्थापयितुं पदार्थान् ॥६४॥
बहिर्जवनिकां बद्ध्वा लोकान्कृत्वा ऽथ तद्वहिः ॥
पृथक्पृथग् द्वारपालास्तदा जग्मुर्महानसान् ॥ ६५ ॥
द्वारपालैः कृते मार्गे तेभ्यश्शाकान्नपूर्वकाः ॥
आनीताः पाचकैर्देवपुरस्तात्स्थापितास्तदा ॥ ६६ ॥
ततोऽलङ्कारनैवेद्यमणुनैवेद्यमेव च ॥
तदा संस्थापितं तत्र महानैवेद्यमद्भुतम् ॥ ६७ ॥
व्यञ्जनैरुपशाकैश्च शाकैर्नानाविधैर्युतम् ॥
पर्पटाद्यैश्च संयुक्तं लेह्यैः पेयैस्समन्वितम् ॥ ६८ ॥
खाद्यैश्चोष्यैश्च संयुक्तं पञ्चभक्षसमन्वितम् ॥
अन्नैश्चतुर्विधैर्युक्तं रसैष्षड्भिरसमन्वितम् ॥ ६९ ॥
पञ्चामृतानां चषकपञ्चकं स्वर्णभाजने ॥
निधाय स्थापयामासुर्देवदेवस्य चाग्रतः ॥ ७० ॥

स्वर्णपात्रे निधायाथ कचोलान्स्वर्णनिर्मितान् ॥
तान्पञ्चदशसंख्याकान्नानाफलमुखान्वितान् ॥ ७१ ॥
शरत्सुधांशुधवलशर्करापरिपूरितान् ॥
देवाग्रे स्थापयामासुरलङ्करणहेतवे ॥ ७२ ॥
पञ्चविंशतिसंख्याककचोलांस्तु ततः परम् ॥
नानापदार्थरचितलड्डुकाभिस्समन्वितान् ॥ ७३ ॥
स्वर्णात्मकान्स्वर्णमयभाजने स्थापितान्शुभान् ॥
नैवेद्यार्थं देवपुरस्स्थापयामासुरादरात् ॥ ७४ ॥
शर्करा–घृत–दध्यादिपात्राणि द्वारसन्निधौ ॥
तदा देवस्य पुरतस्स्थापितानि पृथक्पृथक् ॥ ७५ ॥
पानीयपात्रं ताम्बूलपात्रं सुस्वर्णनिर्मितम् ॥
सर्वोपस्करसंयुक्तं स्थापितं देवसन्निधौ ॥ ७६ ॥
एवं महाण्वलङ्कारनैवेद्यांस्ते पृथक्पृथक् ॥
स्थापयित्वा पुनर्जग्मुः पाचका देवमन्दिरात् ॥ ७७ ॥
तदा गुरुवरैः पुनः कुसुममालिकाश्चार्पिता
मुदा जनकजापतेस्सुबुधसत्यबोधाव्हयैः ॥
अनर्घ्यतररत्ननिर्मितसुमालिकाश्चार्पिताः
प्रसूनवरमालिकास्तदनु मण्टपस्याप्यलम् ॥ ७८ ॥
श्रीपादेषूपविष्टेषु नैवेद्यस्य समर्पणम् ॥
कर्तुं तदा सेवकाश्च द्वादशस्तोत्रमारभन् ॥ ७९ ॥
ततश्शङ्खोदकं गृह्य सत्यबोधमुनीश्वराः ॥
नैवेद्यं प्रोक्ष्य तदनु परिषिच्य समीपगम् ॥ ८० ॥
दृग्भ्यां विलोक्य सकलमभिमन्त्र्य गुरूत्तमाः ॥
समार्पयन्नैक्यबुद्ध्या हरिं तद्रसरूपिणम् ॥ ८१ ॥
आर्पयन्रूपभेदेभ्यो नैवेद्यं गुरुशेखराः ॥
पृथक्पृथक्तदा स्वैरं को जानाति तदाशयम् ॥ ८२ ॥
पानीयमर्पयित्वाऽथ हस्तप्रक्षालनादिकम् ॥
सोपस्करं सताम्बूलं † पोत्रिषट्कं समार्पयन् ॥ ८३ ॥

---

† वराहनामकसुवर्णमुद्राः

द्वारपालैस्समाहूता:पाचकाः परिवेषकाः ॥
शीघ्रं प्रगृह्य नैवेद्यं पुनर्जग्मुर्महानसम् ॥ ८४ ॥
देवसेवाद्विजेनाथ नैवेद्यस्थापितस्थले ॥
सम्मार्जिते जवनिका द्वारपालैर्विसर्जिता ॥ ८५ ॥
तदा लोकास्सर्वे रघुपतिपुरस्तान्निजजनै–
स्सह स्थित्वा द्रष्टुं गुरुकृतसुपूजासुरगृहम् ॥
चतुर्भिद्वारैस्तैर्विविशुरबलाश्शावकयुता
मुदा बाला वृद्धा. परिचरनिरुद्धा अपि बलात् ॥ ८६ ॥
धूपार्तिक्यं ततः कृत्वा द्वितीयं गुरुशेखराः ॥
तथा द्वादशसंख्याकमारार्तिक्यं प्रचक्रिरे ॥ ८७ ॥
धामत्रयस्थानगतपीठस्थप्रतिमास्थितान् ॥
ब्रह्मार्चितश्रीरघुपपूर्वकानखिलेष्टदान् ॥ ८८ ॥
धर्मार्थ–काम–सन्मोक्षप्रदानत्यन्तभक्तितः ॥
धामत्रयस्थभगवद्रूपैस्सह हृदम्बरे ॥ ८९ ॥
ऐक्यबुद्ध्या चिन्तयित्वा सत्यबोधमुनीश्वराः ॥
तेभ्यस्तदर्थं ते वेदवेदा (४) र्तिक्यं प्रचक्रिरे ॥ ९० ॥
त्रिवारमेवमभवद्द्वादशार्तिक्यमिष्टदम् ॥
कर्पूरेण ततश्चक्रुरार्तिक्यानां चतुष्टयम् ॥ ९१ ॥
कृत्वा मयूर–शेषाकारार्तिक्ये च ततः परम् ॥
पात्रार्तिक्यं च कलशार्तिक्यं पश्चात्प्रचक्रिरे ॥ ९२ ॥
पञ्चरत्नार्तिक्यमथाक्षतार्तिक्यं ततः परम् ॥
पुष्पाञ्जलिं चार्पयित्वा छत्रादीन्मनसाऽर्पयन् ॥ ९३ ॥
वामसेवाद्विजैर्दत्तचामराभ्यामवीजयन् ॥
व्यजनेनापि श्रीपादा दर्पणं चाप्यदर्शयन् ॥ ९४ ॥
समस्तलोकदुरितनाशकस्य जगत्पतेः ॥
लोकदृग्दोषशान्त्यर्थं शङ्खाम्बुभ्रमणं कृतम् ॥ ९५ ॥
ततो रमादिकान्देवान्परिपूज्य निवेद्य च ॥
कृतां माध्यान्हिकीं पूजां राघवाय समार्पयन् ॥ ९६ ॥

ततः प्रधानप्रमुखैर्वेश्वदेवे कृते सति ॥
नैवेद्यं पुनरानीतं पाचकेनाणुसंज्ञकम् ॥ ९७ ॥
शास्त्रोक्तरीत्या श्रीपादास्संप्रदायानुसारतः ॥
मण्डले स्थापितं स्वामिभिक्षार्थं देवसन्निधौ ॥ ९८ ॥
सन्न्यासिलब्धं भिक्षान्नं प्रोक्षितं तत्कराम्बुना ॥
सद्यः पक्वसमानं स्याध्दरये तन्निवेद्य सः ॥ ९९ ॥
पात्रे निधाय निर्माल्यतुलसी-तीर्थमिश्रितम् ॥
भुक्त्वा पुण्यमवाप्नोति क्रतुकोटिशताधिकम् ॥ १०० ॥
इत्युक्तत्वाद्गुरुवरा वामसेवापरायणैः ॥
बालंभट्टाभिधैर्दत्तां भिक्षां संप्रोक्ष्य चाम्बुना ॥ १०१ ॥
देवस्याभिमुखीभूत्वा संकल्प्य विधिपूर्वकम् ॥
पुनस्सायाह्निकीं पूजां कर्तुमारेभिरे तदा ॥ १०२ ॥
संकल्प्य विधिवत्सायङ्कालपूजार्थमादरात् ॥
गन्ध-श्रीतुलसीमालाश्चार्पयित्वा पृथक्पृथक् ॥ १०३ ॥
रत्नैर्नानाविधैर्देवमलङ्कृत्य गुरूत्तमाः ॥
कृत्वा धूपार्तिक्यमथो चैकार्तिक्यं प्रचक्रिरे ॥ १०४ ॥
ततः पुनर्द्वारपाला लोकान्देवगृहे स्थितान् ॥
बहिर्निष्कासयामासुर्देवसेवाजनान्विना ॥ १०५ ॥
ततस्तु भिक्षानैवेद्यमर्पयित्वा जगत्पतेः ॥
धूपार्तिक्यं पुनश्चक्रुरार्तिक्यानांचतुष्टयम् ॥ १०६ ॥
धामत्रयरथभगवद्रूपैकत्वाच्चतुष्टयम् ॥
आर्तिक्यानां तु ते चक्रुः पुरुषार्थविवक्षया ॥ १०७ ॥
तथैव कर्पूरार्तिक्यद्वयं कृत्वा गुरूत्तमाः ॥
पुष्पाञ्जलिं समर्प्याथ पूजां पश्चात्समापयन् ॥ १०८ ॥
ततो विज्ञाप्य देवेशं ब्राह्मणा वेदपाठकाः ॥
पारायणं ब्राह्मणस्य चक्रुर्देवपुरस्तदा ॥ १०९ ॥
ततश्श्रीमत्सत्यबोधा ध्यात्वा राघवपूर्वकान् ॥
तदात्मकं बिम्बरूपं तदीयप्रतिमास्थितम् ॥ ११० ॥

हृदये पुनरावाह्य त्र्यन्यासं विधाय ते ॥
पिधायाच्छादकेनाथ वेदव्यासादिसंपुटम् ॥ १११ ॥
ततो दक्षिणसेवास्थब्राह्मणैस्तीर्थभाजने ॥
दूरतस्स्थापिते स्वामिवर्यास्स्पृष्ट्वाऽभ्यमन्त्रयन् ॥ ११२ ॥
ततस्ताः प्रतिमास्स्नानपात्रे संस्थाप्य संपुटम् ॥
कनकैरभ्यषिञ्चंस्ते श्रीपादा जनसंसदि ॥ ११३ ॥
पूजयित्वा ततो देवं पुनः पीठे निवेश्य च ॥
वस्त्रैस्सुवेष्टयित्वाऽथ मञ्जूषासु न्यवेशयन् ॥ ११४ ॥
प्रसन्नविठ्ठलं वंशदिग्जयाभिधराघवौ ॥
एकैकपेट्यामेकैकं देवं सम्यङ्न्यवेशयन् ॥ ११५ ॥
अन्यपेट्यां ततो मूलरामं तद्वामपार्श्वके ॥
न्यवेशयञ्जानकीं च सत्यबोधगुरूत्तमाः ॥ ११६ ॥
तदानीं ब्राह्मणाः पञ्चमञ्जूषा देवसंयुताः ॥
शुद्धोर्णाकोशयोर्मध्ये बद्ध्वा चास्थापयन्क्रमात् ॥ ११७ ॥
द्वारपालैस्तदा लोके बहिर्निष्कासिते सति ॥
श्रीपादा देवमानम्य बहिर्याता हि शीघ्रतः ॥ ११८ ॥
द्वारपालास्तु तत्पूर्वं बहिः पीठं निधाय ते ॥
श्रीपादागमनार्थाय मार्गं चक्रुस्सभातले ॥ ११९ ॥
तदानीं बहिरागत्य सत्यबोधमुनीश्वराः ॥
पीठोपर्युपविष्टास्ते तीर्थप्राशनमाचरन् ॥ १२० ॥
ततस्तीर्थं समस्तेभ्यो ददुश्श्रीपादशेखराः ॥
विद्वद्भ्योऽङ्गार–निर्माल्ये गृहिभ्यो लड्डुकानपि ॥ १२१ ॥
तीर्थलोके तु निश्शेषे प्रोत्थाय गुरुशेखराः ॥
गत्वा ते लघुशङ्कार्थं पादप्रक्षालनादिकम् ॥ १२२ ॥
कृत्वा ततस्समागत्य पुनर्देवगृहं प्रति ॥
त्यक्त्वा ते पादुकायुग्मं गत्वान्तर्देवसन्निधौ ॥ १२३ ॥
गृहीत्वा धौतवस्त्राणि परिधाय गुरूत्तमाः ॥
पीठोपविष्टा जेपुस्ते रात्रौ प्रणवपूर्वकान् ॥ १२४ ॥

ततस्तु मण्डले देवे स्थापिते देवसेवकैः ॥
प्रदक्षिण–नमस्कारांश्चक्रुस्ते गुरुशेखराः ॥ १२५ ॥
तदानीमप्पणाचार्यैर्लोका विद्वज्जनादयः ॥
यथायोग्यानुसारेण भोंजनार्थं निवेशिताः ॥ १२६ ॥
ततस्स्वर्णात्मिका दोला स्वर्णशृङ्खासमन्विता ॥
मण्टपे रौप्यरचिते निबद्धा देवसेवकैः ॥ १२७ ॥
अनर्घ्यशय्यासंयुक्ता पुष्पमालास्वङ्कृता ॥
दीपैरनेकैः परितस्संयुक्ताऽतिमनोहरा ॥ १२८ ॥
वामसेवारतैर्विप्रैर्बालंभट्टाभिधैस्तथा ॥
तस्यां निवेशितो देवश्श्रीपादास्तत्र चागताः ॥ १२९ ॥
कृत्वा प्रदक्षिणं पश्चान्नमस्कृत्वा ततः परम् ॥
देवस्याग्रे निविष्टास्ते पूजां चक्रुर्विधानतः ॥ १३० ॥
पाद्यार्घ्यपूर्वकान्दत्वा तुलसी–पुष्पपूर्वकैः ॥
पूजयित्वा रघुपतिं ततो जवनिकान्तरे ॥ १३१ ॥
निवेदयित्वा पानीयफल–ताम्बूलपूर्वकान् ॥
तदा दाशरथेश्चक्रुरारातिक्यचतुष्टयम् ॥ १३२ ॥
कर्पूरारातिक्ययुग्मं च कृत्वा ते गुरुशेखराः ॥
दोलां प्रचालयामासुर्गीत–वादित्रपूर्वकैः ॥ १३३ ॥
वेणुवादनसम्मिश्रैस्तन्त्रीलयसमन्वितैः ॥
पूजां समाप्य रघुपं नत्वा देवगृहं ययुः ॥ १३४ ॥
ततोऽलङ्कारनैवेद्यब्राम्हणेभ्यो गुरूत्तमाः ॥
लेपनार्थं श्वेतगन्धं कुङ्कुमावर्तं च ते ददुः ॥ १३५ ॥
ततस्समस्तविद्वद्भ्यो मुख्यलोकेभ्य एव च ॥
गन्ध ददुस्सत्यबोधास्संप्रदायानुसारतः ॥ १३६ ॥
तदानीमणुनैवेद्यादानीय परिवेषकैः ॥
तद्योग्यमुख्यविद्वद्भ्यस्तदीयैः परिवेषितम् ॥ १३७ ॥
प्रधानेभ्यस्तथाऽन्येभ्यो विद्वद्भ्यः परिवेषकैः ॥
महानैवेद्यमुध्दृत्य प्रत्येकं परिवेषितम् ॥ १३८ ॥

प्राङ्मर्यादानुसारेण श्रीपादानुग्रहेण वा ॥
मानं विद्वज्जनैर्लब्धं प्राचीनैर्नूतनैरपि ॥ १३९ ॥
पाचकेनाणुनैवेद्ये समानीते सभां प्रति ॥
श्रीपादा बहिरागत्य निविष्टास्ते सभातले ॥ १४० ॥
हस्तोदके तदा दत्ते खंडेरायमुखैस्ततः ॥
श्रीपादभाजने पश्चात्पाचकः पर्यवेषयत् ॥ १४१ ॥
दत्वा गोंग्रासमथ ते स्वभोज्यं विदुषे ततः ॥
परमान्नं ततोऽन्यस्मै दत्वा भोक्तुमथारभन् ॥ १४२ ॥
रामायणादिश्रवणव्याजेन गुरुशेखराः ॥
भोजनं चक्रिरे सर्वविद्वन्मुखजनैस्सह ॥ १४३ ॥
ततस्तु घृतपात्राणि गृहीत्वा परिवेषकैः ॥
दधिपात्राण्यपि तदा सर्वत्र परिवेषितम् ॥ १४४ ॥
तदानीमपणाचार्यैः पङ्क्त्यां पङ्क्त्यां सभातले ॥
सर्वत्र दक्षिणा दत्ता श्रीपादानामनुज्ञया ॥ १४५ ॥
ततो महानसाध्यक्षस्समाप्ते सति भोजने ॥
सर्वत्र परिपूर्णं तु जातमित्याह तत्पुरः ॥ १४६ ॥
तत उत्थाय श्रीपादाः कृत्वा गण्डूषणादिकम् ॥
तीर्थं पीत्वा सभां गत्वा चोपविष्टा वरासने ॥ १४७ ॥
ततः प्रभुवरैस्स्वामिपादार्तिक्ये कृते सति ॥
मन्त्राक्षतान्ते श्रीपादा ऋगुपन्न्यासमाचरन् ॥ १४८ ॥
तत्रादावृचमुच्चार्य पदं कृत्वा ततः क्रमम् ॥
अनुक्रमणिकामुक्त्वा ऋगर्थं समबोधयन् ॥ १४९ ॥
ततस्स्वरप्रक्रियां ते त्वन्यानुक्तामुदीर्य च ॥
लोकेभ्यस्स्वामिभिर्दत्तं माला—मन्त्राक्षतादिकम् ॥ १५० ॥
विश्राम्यतामित्युक्त्वाऽथ गत्वा देवगृहं प्रति ॥
शय्यायामुपविष्टास्ते राजगोष्ठीः प्रचक्रिरे ॥ १५१ ॥
ततस्सर्वाननुज्ञाप्य सत्यबोधमुनीश्वराः ॥
शय्यायां भगवच्चित्ता निद्रामापुर्गुरूत्तमाः ॥ १५२ ॥

एकादश्यां तु कलशदेवयोरक्षतार्पणम् ।।
अर्पणं सनकादिभ्यो गन्ध–निर्माल्ययोर्द्वयोः ।। १५३ ।।
तथैव फलमुख्यानांमर्पणं गुरुभिः कृतम् ।।
तस्माज्जवनिकाभावो नैवेद्यस्यार्पणे सति ।। १५४ ।।
एकादश्यां स्वर्णमुद्रार्पणं श्रीपादपीठयोः ।।
आर्तिक्यकरणं चैव संप्र[illegible]यो मठस्य सः ।। १५५ ।।
इत्थं यदुक्तं गुरुसत्यबोधश्रीपादवर्याचरितान्हिकेषु ।।
भीमाह्वयेनान्हिकलेशमुक्तं श्रुत्वा बुधाः पुण्यफलं लभन्ते ।।१५६।।

**इति श्रीम........पूर्णबोधगुरुवंशकथाकल्पतरौ**
**श्रीसत्यबोधतीर्थश्रीपादान्हिकमहिमवर्णनं नाम**
**सप्तविंशः शाखासर्गः**



## अष्टाविंशः शाखासर्गः

अथ श्रीमत्सत्यबोधा गुरुराज्यधुरन्धराः ।।
श्रीरामदेवप्रीत्यर्थं चक्रुरान्हिकमन्वहम् ।। १ ।।
नवरात्रोत्सवे तस्मिन्सवणाख्यपुरे तदा ।।
अपूजयन्रामदेवं विशेषेण गुरूत्तमाः ।। २ ।।
नानाविधैरलङ्कारैर्मुक्तामालादिभिस्तदा ।।
रत्नौघैर्विविधैर्दिव्यैर्वसनैर्नूतनैरपि ।। ३ ।।
पुष्पैर्नानाविधैर्मालामणिमण्डितमण्टपे ।।
फलैर्नानाविधैस्स्वादुनैवेद्यैस्सुमनोहरैः ।। ४ ।।
घृतदीपैरगणितैरारार्तिक्यगणैरपि ।।
अपूजयन्सत्यबोधा नित्यं स्वर्णाभिषेचनैः ।। ५ ।।
एवमाचरितो नित्यं नवरात्रोत्सवस्तु तैः ।।
सवणाख्यपुरे नानादेशागतजनाकुले ।। ६ ।।
तत्पूर्वमेव श्रीपादैर्महावैराग्यशालिभिः ।।
कर्तुं गोदावरीयात्रां मनसैव सुनिश्चितम् ।। ७ ।।

तदानीं कस्यचित्स्वप्ने त्वेकदा काचिदङ्गना ।।
श्वेताम्बरधरा गन्ध–माल्याद्यैस्समलङ्कृता ।। ८ ।।
मुखं प्रक्षाल्य गच्छन्तं श्रीपादानां स्थलं प्रति ।।
प्रातस्समेत्य विप्रं तमब्रवीद्विनयान्विता ।। ९ ।।
मयाऽप्यागम्यते स्वामिदर्शनार्थं त्वया सह ।।
विप्र मा गच्छ मां हित्वा स्वामिस्नानस्थलं प्रति ।। १० ।।
इत्युक्त्वाऽन्तर्दधे नारी स्वप्ने विप्रस्य तत्क्षणात् ।।
जागरूको निशान्तेऽथ कौतूहलसमन्वितः ।। ११ ।।
स शय्यायास्समुत्थाय स्वप्नार्थावगमेच्छया ।।
प्रातस्त्वकथयत्स्वप्नं रहस्स्वीयजनान्प्रति ।। १२ ।।
किमेतदिति तत्स्वप्नं बहुधा तैर्विचारितम् ।।
तत्रैकस्स्वामिनामग्रे तत्सर्वं समकीर्तयत् ।। १३ ।।
तां वार्तां स्वामिनश्श्रुत्वा मनसा समचिन्तयन् ।।
प्रायो भागीरथी साऽस्मिन्नागच्छेन्नात्र संशयः ।। १४ ।।
मनसैव विचार्याथ सत्यबोधमुनीश्वराः ।।
परीक्षितुं समुद्युक्ता नवरात्रोत्सवे सति ।। १५ ।।
ततः परस्मिन्दिवसे भास्करस्योदये तदा ।।
कार्तिकस्नानमारब्धं तदानीं दशमीदिने ।। १६ ।।
ग्रामाद्बहिः पूर्वभागे मध्यदेशे तटाकयोः ।।
आरामे घटिकाराणां वापी तन्नामिका स्थिता ।। १७ ।।
तस्यामौदुम्बरतरुरुदग्भागे स्थितस्तथा ।।
तत उत्तरदिग्भागे धात्रीवृक्षो मनोहरः ।। १८ ।।
तदुत्तरेऽश्वत्थवृक्षो विष्णु–वैष्णवसंश्रितः ।।
समन्तात्पुष्पलतिकास्तथैव तुलसीवनम् ।। १९ ।।
एवं पुण्यतमे तत्र धात्रीवृक्षादधस्तदा ।।
कुटीरं निर्मितं स्वामिजपार्थं प्रभुशेखरैः ।। २० ।।
विजयाख्यदशम्यां ते प्रभाते गुरुशेखराः ।।
वाप्यां तस्यां सर्वजनैस्सह स्नानं प्रचक्रिरे ।। २१ ।।

तदैव जान्हवी साक्षादौदुम्बरतरोरधः ॥
वापीमध्यप्रदेशे सा तच्छाखानिर्गताऽपतत् ॥ २२ ॥
अपतन्बिन्दवस्तस्या मन्दं मन्दं यदृच्छया ॥
निरन्तरं स्नानकाले श्रीपादानां तपोबलात् ॥ २३ ॥
दृष्ट्वाऽम्बुपातं शाखाया औदुम्बरतरोरधः ॥
वापीमध्ये जनैः प्रोक्तं श्रीपादाग्रे महाद्भुतम् ॥ २४ ॥
श्रीपादैस्तज्ज्ञातमभून्नान्यैर्ज्ञातं सुदुर्लभम् ॥
पुनस्तन्नोक्तमन्येभ्यो गोप्यत्वात्पुण्यशालिभिः ॥ २५ ॥
ततः कुटीरं ते गत्वा धात्रीमूले गुरूत्तमाः ॥
उपविष्टा जपं कर्तुं राम–व्यासपुरस्तदा ॥ २६ ॥
ततः कार्तिकमाहाम्यं कावेर्याश्च तथैव च ॥
माहात्म्यं शुश्रुवुस्तत्र तथा भागवतं परम् ॥ २७ ॥
ततः कथायास्संगत्या प्राप्ता भागीरथीकथा ॥
श्रीपादा भक्तिभरिता जान्हवीं समकीर्तयन् ॥ २८ ॥
विष्णोर्वामाङ्गुष्ठनखनिर्भिन्नोर्ध्वाण्डनिस्सृताम् ॥
भगीरथप्रयत्नेन धरणीमण्डलं गताम् ॥ २९ ॥
निरन्तरं स्नानकालेऽत्यन्तमात्मार्थितां तदा ॥
राम–वेदव्यासपूजासाधनार्थमिहागताम् ॥ ३० ॥
औदुम्बरतरोश्शाखामध्यभागादधो जले ॥
वापीमध्ये पतन्तीं तां बिन्दुरूपेण जान्हवीम् ॥ ३१ ॥
श्लाघयित्वा सभामध्ये सत्यबोधमुनीश्वराः ॥
तदम्बुपूतपानीयां वापीं प्रति वरं ददुः ॥ ३२ ॥
अद्य प्रभृति वापीयं विष्णुपादोदसंश्रयात् ॥
विष्णुतीर्थमिति ख्याता भूयाल्लोकैर्महीतले ॥ ३३ ॥
एवं तस्या वरं दत्वा सत्यबोधगुरूत्तमाः ॥
निरन्तरं समागत्य तत्र स्नानं प्रचक्रिरे ॥ ३४ ॥
मध्ये मध्ये गुरुश्रेष्ठा वरदाख्यनदीं प्रति ॥
गत्वा स्नात्वा समागत्य देवपूजां प्रचक्रिरे ॥ ३५ ॥

ततो महाभिषेकार्थं नानादेशैस्समागताः ॥
लोकाश्श्रीरामदेवस्य पूजादर्शनकाङ्क्षया ॥ ३६ ॥
तैस्समन्तात्समाक्रान्ता पुरी सा सवणाभिधा ॥
रथाश्व–वृषभैर्नारी–नरवर्यैस्समागतैः ॥ ३७ ॥
ततो महाभिषेकार्थं पूर्वभागे गृहाद्बहिः ॥
अङ्गणे मण्टपं चक्रुराच्छादनसमन्वितम् ॥ ३८ ॥
अनेककदलीस्तम्भैश्चूतपल्लवतोरणैः ॥
नारिकेलमुखैर्नानाफलैर्वस्त्रैरलङ्कृतम् ॥ ३९ ॥
वेदिकाद्वयसंयुक्तं चतुरस्रं मनोहरम् ॥
एवं ते मण्टपं चक्रुः पूजार्थं जगदीशतुः ॥ ४० ॥
ततस्समन्ताल्लोकार्थं मण्टपं चक्रिरे बृहत् ॥
वेदिकां समलञ्चक्रुः प्रतिपद्युदिते रवौ ॥ ४१ ॥
कार्तिकस्य सिते पक्षे देवसेवारतैर्द्विजैः ॥
स्नातैर्देवाभिषेकार्थं न्यस्तं सर्वमुपस्करम् ॥ ४२ ॥
वामदक्षिणसत्सेवारतब्राम्हणयोस्तदा ॥
साहाय्यार्थमुभौ विप्रौ स्वामिभिः परिकल्पितौ ॥ ४३ ॥
बृहत्पित्तलपात्रेषु क्षीर–दध्यादिकाखिलम् ॥
वेद्यां तु पश्चिमे भागे स्थापितं बहुलं तदा ॥ ४४ ॥
पीठं मध्येऽभिषेकार्थं स्थापयित्वा तदग्रतः ॥
पीठे संस्थापयामासुर्मञ्जूषापञ्चकं हरेः ॥ ४५ ॥
ततः पदार्थान्विविधान्पूजायोग्यान्निधाय च ॥
चक्रुस्सर्वानुकूल्यं ते लोकास्सर्वे समागताः ॥ ४६ ॥
ततो बहिस्समागत्य श्रीपादा वेदिकां प्रति ॥
उत्तराभिमुखा भूत्वा उपविष्टास्तदग्रतः ॥ ४७ ॥
रामादिपञ्चप्रतिमास्स्नानपात्रे निधाय ते ॥
संपुटं स्थापयामासुर्वेदव्यासादिसंयुतम् ॥ ४८ ॥
ततः पात्रान्तरे कृष्णद्वैपायनसुरार्चनम् ॥
न्यस्तं ततस्सत्यबोधाश्चक्रुः कलशपूजनम् ॥ ४९ ॥

वामसेवाद्विजैश्शङ्खद्वन्द्वे क्षीरेण पूरिते ॥
आरेभिरेऽभिषेकं ते शङ्खाभ्यां गुरुशेखराः ॥ ५० ॥
तदानीमभवद्भेरीमुखवाद्यस्वनो महान् ॥
महाभिषेके त्वारब्धे मध्यान्हे गुरुशेखरैः ॥ ५१ ॥
घटिकाषट्कपर्यन्तममूत्क्षीराभिषेचनम् ॥
एवं क्रमेण ते चक्रुर्दध्याज्य–मधुपूर्वकैः ॥ ५२ ॥
वेदचोषं तदा चक्रुर्ब्राह्मणा वेदवित्तमाः ॥
अभिषेकसमाप्त्यन्तं वाद्यघोषो महानभूत् ॥ ५३ ॥
ब्राह्मणैर्विधृता दीपा भास्करास्तमये सति ॥
धृतानि चन्द्रज्योतींषि प्रकाशार्थं स्थले स्थले ॥ ५४ ॥
गन्धकाङ्गारशेषादिजातानि विविधान्यपि ॥
उत्क्षिप्तानि तदा ज्वालापुष्पाणि परिचारकैः ॥ ५५ ॥
नानादेशागतवधू–पुरुषेभ्यस्तथैव च ॥
द्वारपालैः प्रधानेभ्यस्स्थलं क्लृप्तं पृथक् पृथक् ॥ ५६ ॥
क्षीरमुख्याभिषेकान्ते कृता पूजा पृथक्पृथक् ॥
पूजासमाप्तौ सर्वत्र कृतं स्वर्णाभिषेचनम् ॥ ५७ ॥
तत उद्वर्तनं कृत्वा पुनस्स्नात्वा गुरूत्तमाः ॥
कृते पूजानुकूल्येऽथ महापूजां प्रचक्रिरे ॥ ५८ ॥
ततस्तीर्थादिकं दत्वा भुक्त्वा सर्वजनैस्सह ॥
पूजिताः प्रभुवर्येभ्यो ददुर्मन्त्राक्षतादिकम् ॥ ५९ ॥
ततोऽनुज्ञां समस्तेभ्यो दत्वा श्रीगुरुशेखराः ॥
विश्रामार्थं तदा जग्मुर्देवगेहं सभातलात् ॥ ६० ॥
श्रीरामदेवस्य महाभिषेककथां सुपुण्यां परमादरेण ॥
श्रुण्वन्ति ये ते गुरुसार्वभौमा धराधिराजा अथवा भवन्ति ॥ ६१ ॥

**इति श्रीमद्वेणु........पूर्णबोधगुरुवंशकथाकल्पतरौ**
**श्रीसत्यबोधतीर्थकृतमहाभिषेककथावर्णनं**
**नाम अष्टाविंशः शाखासर्गः**



## एकोनत्रिंशः शाखासर्ग

ततो निरन्तरं विष्णुतीर्थे स्नात्वा गुरूत्तमाः ।।
स्वैरं सीतापतेः पूजां चक्रुस्ते विधिपूर्वकम् ।। १ ।।
ततस्तु कार्तिके शुक्लत्रयोदश्यामिनोदये ।।
समागतास्सत्यबोधा विष्णुतीर्थस्थलं प्रति ।। २ ।।
तदानीं पुनरायातास्तद्वृक्षात्तोयबिन्दवः ।।
अपतन् विष्णुतीर्थान्तस्स्थूलरूपाः क्षणे क्षणे ।। ३ ।।
एवं दिनत्रयं नित्यं स्नानकाले महात्मनाम् ।।
अपतन् यामपर्यन्तं सर्वेषां पश्यतां पुरः ।। ४ ।।
दृष्ट्वाऽम्बुपातं श्रीपादाः पौर्णमास्यां कुतूहलात् ।।
जपं समाप्य चक्रुस्ते निर्माल्यस्य विसर्जनम् ।। ५ ।।
पूजासाधनसंयुक्ता विष्णुतीर्थजलं प्रति ।।
गत्वा महाभक्तियुक्ता गङ्गां तां समपूजयन् ।। ६ ।।
पाद्यार्घ्य–स्नान–वसन–विभूषण–सुकुङ्कुमैः ।।
गन्धाद्यैः पुष्पमालाभिर्धूपैर्दीपैर्निवेदनैः ।। ७ ।।
आरार्तिक्यैरम्बुदीपैर्मनसा प्रार्थनादिभिः ।।
प्रदक्षिण–नमस्कारैर्महावादित्रघोषणैः ।। ८ ।।
सुवासिनीपूजनाद्यैश्शूर्पदानैस्स्तवैरपि ।।
अपूजयन्सत्यबोधाः प्रत्यक्षं सुरनिम्नगाम् ।। ९ ।।
ततः कुटीरं ते गत्वा तीर्थं पीत्वा गुरूत्तमाः ।।
कारयामासुराचार्यपूजां प्रभुवरैस्तदा ।। १० ।।
दत्वा समस्तलोकेभ्यस्तीर्थ–मन्त्राक्षतादिकम् ।।
मठं गत्वा गुरुवरा देवतार्चनमाचरन् ।। ११ ।।
ततो भुक्त्वा सभामध्ये पूजिताः प्रभुशेखरैः ।।
अनुज्ञाप्याथ सर्वांस्तान्कृतकृत्या बभूविरे ।। १२ ।।
श्रुत्वा श्रीपादमाहात्म्यं पुरेशः परमादरात् ।।
विष्णुतीर्थेन सहितं स्वकीयोपवनं ददौ ।। १३ ।।

मार्गशीर्षेऽप्येवमेव चक्रुस्स्नानादिसत्क्रियाम् ।।
विष्णुतीर्थे महापुण्ये सत्यबोधमुनीश्वराः ।। १४ ।।
कार्तिके मासि पूर्वं ते विष्णुतीर्थं यदा गताः ।।
गोलाङ्गूलस्तदाऽभ्येत्य श्रीपादानुगतोऽभवत् ।। १५ ।।
तैस्सहैव स गत्वाऽथ विष्णुतीर्थे मलापहे ।।
श्रीपादेषूपविष्टेषु निविष्टोऽभूत्तदग्रतः ।। १६ ।।
स्नानकाले तटे स्थित्वा मार्जितश्च गुरूत्तमैः ।।
धृतोर्ध्वपुण्ड्रो विप्रेन्द्रैर्ललाटे स्वामिसन्निधौ ।। १७ ।।
तैर्दत्ते देवनैवेद्ये स जग्राह बभक्ष च ।।
नोच्छिष्टं भक्षितं तेन मर्कटेन कदाचन ।। १८ ।।
निर्माल्यमालिकां कण्ठे क्षिप्तां धृत्वा सभातले ।।
उपविष्टो नर इव वानरो गुर्वनुग्रहात् ।। १९ ।।
आन्दोलिकायां श्रीपादेषूपविष्टेषु पृष्ठतः ।।
मठं प्रति जगामाशु श्रीपादानुगतैस्सह ।। २० ।।
पदार्थान्स्थापितान्दृष्ट्वा न जग्राह करेण सः ।।
उपद्रवे कृते म्लेञ्च्छैर्दन्तैर्जग्ध्वा जघान तान् ।। २१ ।।
वानरं तं नराचारं न जानेऽहं स्वरूपतः ।।
को वा प्रायो भवेन्मर्त्यः पुण्यवान् ज्ञानवान्सुधीः ।। २२ ।।
केन वा कर्मणा भूमौ भूत्वा शाखामृगाग्रणीः ।।
जन्मान्तरार्जितात्पुण्यात्सत्यबोधानिहाश्रयत् ।। २३ ।।
गीताभाष्यं स शुश्राव व्याख्यानावसरेऽनिशम् ।।
तत्रागत्योपविष्टस्सन्मर्कटोऽपि यथा बुधः ।। २४ ।।
द्वितीयाध्यायमाहात्म्यं गीतायास्तु यथा पुरा ।।
श्रुत्वाऽजा–द्वीपिनौ वैरं हित्वा मुक्तौ बभूवतुः ।। २५ ।।
गोलाङ्गूलस्तथैवाऽयं गीताभाष्यं निरन्तरम् ।।
श्रुत्वा त्यक्त्वा दुष्टभावं गृहेषु स चचार ह ।। २६ ।।
कर्मशेषं ततः किञ्चिदनुभूय क्रमेण सः ।।
त्यक्त्वा देहं परं प्राप सत्यबोधप्रसादतः ।। २७ ।।

एवमादिकथाः पुण्यास्सत्यबोधमहात्मनाम् ॥
श्रुण्वतां पापनिचयनाशकास्ताः कलौ युगे ॥ २८ ॥
माघमासे ततः प्राप्ते सत्यबोधमुनीश्वराः ॥
प्रातर्गत्वा विष्णुतीर्थे स्नानं चक्रुर्निरन्तरम् ॥ २९ ॥
ततो माघनवम्यां ते स्नात्वा संपूज्य राघवम् ॥
दत्वा वस्त्राणि विप्रेभ्यस्त्वलङ्काराख्यभोजनम् ॥ ३० ॥
कारयित्वाऽखिलैस्साकं स्वयं भुक्त्वा सभातले ॥
दत्वा मन्त्राक्षदीस्ते ततो देवगृहं ययुः ॥ ३१ ॥
पौर्णिमादिवसे विष्णुतीर्थे स्नात्वा जपादिकम् ॥
कृत्वा विसृज्य निर्माल्यं श्रुत्वा माघवसत्कथाम् ॥ ३२ ॥
कारयित्वा प्रभुश्रेष्ठैराचार्याणां प्रपूजनम् ॥
गो–भू–तिल–हिरण्यादिदानं चक्रुर्गुरूत्तमाः ॥ ३३ ॥
मठे देवार्चनं कृत्वा सभायां ब्राह्मणैस्सह ॥
निविष्टा भोजनं चक्रुः पुराणश्रवणेन ते ॥ ३४ ॥
ततोऽर्चिताः प्रभुवरैर्दत्वा मन्त्राक्षतादिकम् ॥
विश्रमार्थं देवगृहं जग्मुस्ते गुरुशेखराः ॥ ३५ ॥
एवं संवत्सरं सर्वमतीतं रामसेवया ॥
सवणाख्यपुरे श्रीमत्सत्यबोधमुनीश्वरैः ॥ ३६ ॥
ततो वसन्तस्संप्राप्तस्सर्वप्राणिसुखप्रदः ॥
देवाधिदेवपूजार्थं भूमण्डलवनं प्रति ॥ ३७ ॥
कुसुमानामभूज्जन्म ततः पल्लवसंभवः ॥
ततोऽलि–पिकरावश्च वसंन्ते तु समागते ॥ ३८ ॥
ततो वसन्ते संप्राप्ते सत्यबोधमुनीश्वराः ॥
वासन्तीकुसुमैर्देवं निरन्तरमपूजयन् ॥ ३९ ॥
निवृत्ते फाल्गुने चैत्रे प्रतिपद्युदिते रवौ ॥
स्नानार्थं विष्णुतीर्थं ते जग्मुस्सर्वजनैस्सह ॥ ४० ॥
ततो रामनवम्यां तदभिषेके समागते ॥
पुनरप्यागता लोकास्सवणाख्यपुरीं प्रति ॥ ४१ ॥

यथा महाभिषेकोऽभूत्कार्तिकप्रतिपद्दिने ॥
तथा रामनवम्यामप्यभिषेकोऽभवत्पुनः ॥ ४२ ॥
कृत्वा महोत्सवं सम्यक्सत्यबोधगुरूत्तमाः ॥
दशमीदिवसे प्राप्ते वैशाखस्नानमारभन् ॥ ४३ ॥
ततो निरन्तरं गत्वा विष्णुतीर्थस्थलं प्रति ॥
स्नात्वा ऽऽगत्य गृहे रामपूजां सम्यक्प्रचक्रिरे ॥ ४४ ॥
वैशाखशुक्लसप्तम्यां भास्करस्योदये सति ॥
विष्णुतीर्थस्थलं जग्मुस्स्नानार्थं गुरुशेखराः ॥ ४५ ॥
जान्हव्युत्पत्तिदिवसे तस्मिन्पुण्यतमे तदा ॥
वितस्तिमात्रं ववृधे विष्णुतीर्थस्थितं जलम् ॥ ४६ ॥
यदृच्छयाऽधिकं दृष्ट्वा सर्वे ते विस्मितास्तदा ॥
पूर्वमौदुम्बराद्गङ्गा पतने संशयात्मनाम् ॥ ४७ ॥
तत्संशयनिवृत्त्यर्थं ववृधे जलरूपिणी ॥
पुनः प्रत्यक्षतां ज्ञात्वा जान्हव्यास्ते गुरूत्तमाः ॥
स्नात्वा जप्त्वा सुतीव्रेण जान्हवीं समपूजयन् ॥ ४९ ॥
कार्तिके तु यथा पूर्वं गङ्गापूजनमाचरन् ॥
पुनस्तस्यां च श्रीपादास्तथा तां समपूजयन् ॥ ५० ॥
एवं गङ्गा विष्णुतीर्थे सवणाख्यपुरोत्तमे ॥
आविर्बभूव श्रीसत्यबोधतीर्थतपोबलात् ॥ ५१ ॥
सा वार्ता सर्वलोकेषु विख्याता भूमिमण्डले ॥
श्रीसत्यबोधश्रीपाददर्शनार्थं समागतैः ॥ ५२ ॥
एवं निरन्तरं विष्णुतीर्थे स्नात्वा गुरूत्तमाः ॥
सीतारघुपतेः पूजां चक्रुस्ते विधिपूर्वकम् ॥ ५३ ॥
महाभिषेकरचितमण्टपे मन्दिराद्बहिः ॥
देवसेवाविप्रबद्धदोलामध्ये रघूत्तमम् ॥ ५४ ॥
स्थापयित्वा ततो रात्रौ नानाविभवपूर्वकम् ॥
अपूजयन्सभामध्ये सत्यबोधगुरूत्तमाः ॥ ५५ ॥

ब्राह्मणान्गन्ध–कुसुममाला–व्यजनवीजनैः ॥
फलाहारैः पानकैश्च चूतमुख्यफलैरपि ॥ ५६ ॥
शीतलैरुदकैर्दिव्यैर्भोजनैस्सुमनोहरैः ॥
नित्यं दध्यन्नदानैश्च दक्षिणाभिरतोषयन् ॥ ५७ ॥
पौर्णिमादिवसे स्नात्वा विष्णुतीर्थे गुरुत्तमाः ॥
जप्त्वा ततो व्यासपूजां चक्रुस्तीर्थतटे मुदा ॥ ५८ ॥
कारयित्वा प्रभुवरैस्सम्यगाचार्यपूजनम् ॥
मठे संपूज्य रघुपं कृतकृत्या बभूविरे ॥ ५९ ॥
गते वसन्ते तदनु ग्रीष्मकाले समागते ॥
लोकोपतापशान्त्यर्थमागतास्साम्बुवारिदाः ॥
मध्यान्हानन्तरं नित्यं वाता धूलिसमन्विताः ॥
वारिदैस्सहितास्स्वैरं चेरुर्गगनमण्डले ॥ ६१ ॥
आषाढमासे संप्राप्ते कृष्णेऽथो पञ्चमीदिने ॥
जयतीर्थमुनेः पुण्यतिथिं चक्रुर्गुरूत्तमाः ॥ ६२ ॥
यथाऽऽदौ मध्वनवमीदिनेऽलङ्करणादिकम् ॥
चक्रुस्तथैव विधिवत्तत्रापि गुरुशेखराः ॥ ६३ ॥
निवृत्ते ग्रीष्मसमये वर्षाकाले समागते ॥
सर्वौषध्यभिवृद्ध्यर्थं सर्वत्रेन्द्रो ववर्ष ह ॥ ६४ ॥
तदैवौदुम्बरगतो गङ्गासंयोगपुण्यतः ॥
नवमासं कर्मशेषं भुक्त्वा तत्र ततः परम् ॥ ६५ ॥
समूलं तरुदेहं स त्यक्त्वा तीर्थे जलान्तरे ॥
मुक्तो भूत्वा परं प्राप जीवश्श्रीपादसन्निधौ ॥ ६६ ॥
एवं वत्सरपर्यन्तं यथा ते चक्रुरान्हिकम् ॥
तथा द्वितीयवर्षादौ चक्रिरे विधिपूर्वकम् ॥ ६७ ॥
यथेष्टकुसुमैर्नित्यं यथेष्टतुलसीदलैः ॥
मण्टपैः कदलीस्तम्भैश्श्रीपादा राममार्चयन् ॥ ६८ ॥
सवणाख्यपुरे सत्यबोधतीर्थकृपाबलात् ॥
शान्ता बभूवुस्सर्वेषां महादुरितसंचयाः ॥ ६९ ॥

विश्वासेन पुरेशोऽपि परिपूज्य गुरूत्तमान् ॥
महाभिषेको यत्रासीन्मठार्थं तां भुवं ददौ ॥ ७० ॥
ततो विठ्ठलमूर्तेस्तु प्रतिष्ठां गुरुशेखराः ॥
ब्राह्मणैः कारयित्वाऽथ स्वयं तां समपूजयन् ॥ ७१ ॥
इत्थं श्रीसवणाभिधे पुरवरे श्रीसत्यबोधाभिध
श्रीपादा रघुपुङ्गवं प्रतिदिनं स्वैरं प्रसूनादिभिः ॥
येऽत्यन्तं समपूजयन्गुरुवरास्तत्कीर्तनेनाखिला
भीष्टावाप्तिरलंभवेदिह नृणां भक्तिः परा राघवे ॥ ७२ ॥

**इति श्रीम.....पूर्णबोधगुरुवंशकथाकल्पतरौ**
**श्रीसत्यबोधर्यश्रीपादमहिमवर्णनं नाम एकोनत्रिंशः शाखासर्गः**

---

## अथ त्रिंशः शाखासर्गः

ततो महाभिषेकार्थं श्रीरामनवमीदिने ॥
पुनस्सर्वे समायातास्सवणाख्यपुरीं प्रति ॥ १ ॥
विरोधिकृद्वत्सरेऽथ मठे पूजानुकूलताम् ॥
प्राप्ते रामनवम्यां ते चक्रुस्तत्राभिषेचनम् ॥ २ ॥
पूर्ववर्षे यथा चक्रुर्नवम्यामभिषेचनम् ॥
ततोऽप्यस्मिन्वत्सरे ते विशेषेणैव चक्रिरे ॥ ३ ॥
गुरोः पुण्यदिने प्राप्ते सत्यबोधमुनीश्वराः ॥
दिवसत्रयपर्यन्तं समाराधनमाचरन् ॥ ४ ॥
ततस्तु सूकरैश्शुभ्रैस्तोषयित्वा द्विजोत्तमान् ॥
दत्वाऽनुज्ञां गच्छतां ते तत्रैवोषुर्गुरूत्तमाः ॥ ५ ॥
वैशाखमासे संप्राप्ते प्रातस्स्नात्वा भगोदये ॥
वासन्तीकुसुमैर्देवमर्चयामासुरन्वहम् ॥ ६ ॥
दध्योदनं पानकं च नानाविधफलादिकम् ॥
निवेदयित्वा देवाय ब्राम्हणेभ्यो ददुर्मुदा ॥ ७ ॥

रात्रौ दोलार्चनं कृत्वा नानाविभवपूर्वकम् ॥
चामरैर्व्यजनाद्यैश्च देवसेवां प्रचक्रिरे ॥ ८ ॥
अथ ज्येष्ठे कृष्णपक्षे पञ्चम्यां मन्दवासरे ॥
मठे संस्थापयामासुर्मासदेवं त्रिविक्रमम् ॥ ९ ॥
तत्पूर्वमेव श्रीपादाः कारयित्वा द्विजोत्तमैः ॥
वास्तुशान्तिं ततो देवस्थापनं चक्रिरे मठे ॥ १० ॥
कृत्वा देवार्चनं सम्यङ्मठमध्ये गुरूत्तमा. ॥
शालायां भोजनं चक्रुर्विद्वद्भिर्निखिलैस्सह ॥ ११ ॥
एवं रघुपतेः पूजामाचरन्तो निरन्तरम् ॥
ऊषुस्तत्रैव श्रीपादाः खण्डेराजसुपूजिताः ॥ १२ ॥
ततो मुरारिराजेन समाहूता गुरूत्तमाः ॥
गतास्तेन विनीतेन भक्त्या नित्यं सुपूजिताः ॥ १३ ॥
ततस्तेनाभ्यनुज्ञातास्संचरन्तस्त्वितस्ततः ॥
स्वामिनः पुनरायातास्सवणाख्यपुरं प्रति ॥ १४ ॥
ततः पुराधिपतिना प्रार्थिता गुरुशेखराः ॥
भवद्भिस्स्थेयमत्रैव सर्वेषां क्षेमकाङ्क्षया ॥ १५ ॥
शान्ता बहुविधा विघ्ना भवतां वासकारणात् ॥
सुखेन वासः कर्तव्यो मठे स्वीये दयालुभिः ॥ १६ ॥
इति संप्रार्थितास्तेन स्वामिनः प्रभुणा तदा ॥
ऊषुस्तत्रैव सततं पूजयन्तो रघूत्तमम् ॥ १७ ॥
अथाजगाम श्रीरङ्गपट्टणाच्छूरशेखरः ॥
म्लेञ्छाधिराजस्सैन्येन सह बंकापुरं प्रति ॥ १८ ॥
तत्सैन्यसंस्थितशिष्याः प्रभोर्विज्ञाप्य सादरम् ॥
बिन्नाहपत्रिकां स्वीयां गुरूणामन्तिकं द्विजैः ॥ १९ ॥
प्रेषयामासुरथ ते जग्मुर्बंकापुरं प्रति ॥
पूजयामासुरत्यन्तं तत्रस्था गुरुशेखरान् ॥ २० ॥
शूराग्रणीस्स्वामिवर्यान्पूजयित्वा धनादिभिः ॥
गजश्रेष्ठं ददौ तेभ्यस्ततश्श्रीपादशेखराः ॥ २१ ॥

सवणाख्यपुरं प्राप्य मठमध्ये रघूत्तमम् ॥
पूजयन्तस्समभवन्सदा व्याख्यानतत्परा: ॥ २२ ॥
**इति श्रीम .... पूर्णबोधगुरुवंशकथाकल्पतरौ श्रीसत्यबोधतीर्थस्वामिनां शूरेशदर्शनं नाम त्रिंशः शाखासर्गः**

---

## अथैकोत्तरत्रिंशशाखासर्गः

ततो मठे महाद्वारसमीपे गुरुशेखरा: ॥
कर्तुं साध्यामृतं तीर्थं राज्ञामाज्ञां ददुस्तदा ॥ १ ॥
तदनुज्ञानुसारेण खण्डेराजोऽतिशोभनम् ॥
तीर्थं निर्मापयामास स्नानार्थं स्वामिनां सदा ॥ २ ॥
तत्पूर्वमेव श्रीपादास्त्रिविक्रमसुरार्चकम् ॥
कल्पयित्वोत्सवांस्तेन कारयामासुरीशितु: ॥ ३ ॥
क्रमाद्रथोत्सवमुखा नानाविधमहोत्सवा: ॥
कृताश्श्रीपादप्रवरैस्तस्यैव जगदीशितु: ॥ ४ ॥
तथैव श्रीवराहं च प्रतिष्ठाप्य गुरूत्तमा: ॥
त्रिविक्रमेण सहितं निरन्तरमपूजयन् ॥ ५ ॥
शिल्पिभि: कारयामासुर्विष्णुतीर्थं मनोहरम् ॥
यथा कर्णाटके सन्ति तीर्थान्येतदभूत्तथा ॥ ६ ॥
ततश्श्रीमत्सत्यबोधतीर्थाश्श्रीरघुपुङ्गवम् ॥
नानाविधै: फलै: पुष्पैर्निरन्तरमपूजयन् ॥ ७ ॥
व्रतार्थं च विवाहार्थं ब्राम्हणेभ्यो ददुर्धनम् ॥
नानादेशादागतेभ्य: पण्डितेभ्यश्च भूरिश: ॥ ८ ॥
ददुर्वस्त्राणि केचिद्भ्य: केचिद्भ्यो भूषणानि च ॥
आन्दोलिकास्तथाऽन्येभ्यो विपश्चिद्भ्यो गुरूत्तमा: ॥ ९ ॥
तत: परमठस्वामिष्वन्योन्यं मुक्तिबोधत: ॥
श्रीस्वामिनां दर्शनार्थं धीरेन्द्रास्तु समागता: ॥ १० ॥

श्रीसत्यबोधतीर्थास्ते दृष्ट्वा नत्वा ततः परम् ॥
कीर्तयित्वाऽऽत्मवृत्तान्तं घटिकारगृहे स्थिताः ॥ ११ ॥
दृष्ट्वा नित्यं देवतार्चां भुक्त्वा स्वामिनिवेदितम् ॥
उषित्वा कतिचित्कालमनुज्ञप्ता ययुस्ततः ॥ १२ ॥
एवं श्रीस्वामिवर्येषु व्याख्या-देवार्चनेच्छया ॥
सवणाख्यपुरस्थेषु वरदायास्तथोत्तरे ॥ १३ ॥
वरदेन्द्राख्यतीर्थास्तु संचरन्तोऽवनीतले ॥
चिन्ताग्रस्ता बभूवुस्ते स्वशिष्यैरप्यमानिताः ॥ १४ ॥
ततश्श्रीमत्सत्यबोधतीर्थानुग्रहकाङ्क्षया ॥
स्वशिष्यान्प्रेषयामासुस्सवणाख्यपुरं प्रति ॥ १५ ॥
ते श्रीमन्मठमभ्येत्य कृत्वा श्रीपाददर्शनम् ॥
आत्मागमनकृत्यं तु तेषामग्रे न्यवेदयन् ॥ १६ ॥
श्रुत्वाऽथ तदभिप्रायं माध्यस्थ्येन तदागमम् ॥
नाङ्गीचक्रुर्न युक्तं तदिति मत्वा मनस्विनः ॥ १७ ॥
पुनः पुनर्ब्राह्मणास्ते संप्रार्थ्याऽथ गुरूत्तमान् ॥
निवारितास्स्वामिवर्यैर्वरदेन्द्रान्तिकं ययुः ॥ १८ ॥
शाके पञ्चाङ्क-भूपाल (१६९५) मिते विजयवत्सरे ॥
मार्गशीर्षे शुक्लपक्षे धनुर्मासे समागते ॥ १९ ॥
प्रतिपद्दिवसे शीघ्रं कृत्वा देवार्चनं निशि ॥
भुक्त्वा मन्त्राक्षता दत्वा विश्रमार्थं सुरालये ॥ २० ॥
गत्वा शयानाश्शय्यायां श्रीपादास्स्वस्थचेतसः ॥
अधिकारिजनैस्तत्तद्वार्तां श्रुत्वा ततः परम् ॥ २१ ॥
नासिकत्र्यम्बकस्थेन तिर्मलाव्हयसूनुना ॥
कृष्णगोसाविना सम्यक्पादसेवादिसेविताः ॥ २२ ॥
तदैव रात्रिघटिकानवके तु गते सति ॥
यदृच्छयाऽथ निश्शब्दा वरदेन्द्रास्समागताः ॥ २३ ॥
हित्वा संस्थानमर्यादां निश्शङ्काः पादचारिणः ॥
मठमेत्य त्रिभिस्साकं विविशुर्देवमन्दिरम् ॥ २४ ॥

नारिकेलफलद्वन्द्वमूर्णावस्त्रे निधाय ते ॥
समीपे स्वामिशय्यास्साष्टाङ्गं प्रणतास्तदा ॥ २५ ॥
यदृच्छयाऽऽगत्य भूमौ प्रणतानविदूरतः ॥
समीक्ष्य तान्स्वामिवर्या उत्तस्थुर्हृदि शङ्किताः ॥ २६ ॥
हित्वा शय्यां देवपार्श्वे स्थिताश्श्रीपादशेखराः ॥
तदैवानन्दनामाऽन्तर्द्वारपालस्स्थितोऽभवत् ॥ २७ ॥
सोऽथ श्रीपादशय्याग्रे दृष्ट्वा निपतितान्भुवि ॥
अभर्त्सयत्तानज्ञात्वा रात्रावन्तस्समागतान् ॥ २८ ॥
के यूयमागता रात्रावतीत्य द्वारदेशगान् ॥
अस्मन्मुखाञ्शयानेषु श्रीपादेषु यदृच्छया ॥ २९ ॥
इति ब्रुवन्तमानन्दनामानं द्वारपालकम् ॥
वरदेन्द्रोऽहमित्यूचुर्नतिं कृत्वा समुत्थिताः ॥ ३० ॥
वरदेन्द्रांस्तु तान्ज्ञात्वा सत्यबोधगुरूत्तमाः ॥
स्थित्वा तत्रैव साम्ना तानवलोक्य बभाषिरे ॥ ३१ ॥
नागन्तव्यं भवद्भिस्तु सर्वथाऽस्मन्मठं प्रति ॥
प्रभोराज्ञां विना रात्रौ छन्नरूपैस्तु किं पुनः ॥ ३२ ॥
एवमुक्तास्तु श्रीपादैस्ते तदा गुरुशेखरान् ॥
ऊचुर्विनयसंपन्नाः प्रसाद्य हृदि शङ्कितान् ॥ ३३ ॥
स्वामिनश्श्रूयतामेवं मयि चाभ्यागते सति ॥
भवतां दर्शनमभून्नो चेन्न स्यात्तु सर्वथा ॥ ३४ ॥
आज्ञामुल्लङ्घ्य भवतां रात्रावेवं समागतः ॥
अपराधश्चास्मदीयः क्षन्तव्यश्च कृपालुभिः ॥ ३५ ॥
भवन्तस्तु क्षमावन्तो वयं सर्वे समत्सराः ॥
पुरातनापेक्षयाऽहमत्यन्तं द्रोहमाचरम् ॥ ३६ ॥
भवतां च कृपालुत्वं श्रुत्वा त्रिमतगैर्द्विजैः ॥
परित्यज्याथ मात्सर्यं प्रमन्नान्कर्तुमागतः ॥ ३७ ॥
मयि प्रयाते भवतां पादमूलं प्रपन्नपन् ॥
अलक्षीकृत्य मद्द्रोहं कृपया क्षन्तुमर्हथ ॥ ३८ ॥

इतः परं तु शय्यायामुपविश्य गुरूत्तमाः ॥
दत्वा पादाम्बुजस्पर्शं स्वीयं मां कर्तुमर्हथ ॥ ३९ ॥
तच्छ्रुत्वा वचनं तेषां सत्यबोधमुनीश्वराः ॥
शय्यायामुपविश्याथ पादस्पर्शं ददुर्मुदा ॥ ४० ॥
अभुक्त्वैवागतान्श्रुत्वा वरदेन्द्रांस्ततः परम् ॥
आज्ञां ददुर्भोजनार्थं नाङ्गीचक्रुश्च ते तदा ॥ ४१ ॥
स्वामिनस्तु ततस्तेभ्यो घटिकारनिकेतने ॥
आज्ञां ददुर्विश्रमार्थं गतास्ते तद्गृहं प्रति ॥ ४२ ॥
गतेषु तेषु श्रीपादास्तुष्टास्तत्कृतसेवया ॥
ततश्शयानाश्शय्यायां निद्रामापुस्सुखेन ते ॥ ४३ ॥
ततः प्रभातसमये कृतशोचा गुरूत्तमाः ॥
धृतोर्ध्वपुण्ड्रा देवाग्रे पारायणमथारभन् ॥ ४४ ॥
तेऽपि तत्पूर्वमुत्थाय कृत्वा स्नानादिकं तदा ॥
श्रीपाददर्शनार्थं तु वरदेन्द्रा मठं ययुः ॥ ४५ ॥
देवद्वारे नमस्कृत्य श्रीपादेभ्यस्ततः परम् ॥
निविष्टास्तत्समीपे ते गोष्ठीश्चक्रुः परस्परम् ॥ ४६ ॥
तदानीं वरदेन्द्रास्तु श्लोकैरेव गुरूत्तमान् ॥
अवर्णयन्स्तुवन्तस्ते महापण्डितमण्डले ॥ ४७ ॥
विज्ञापयित्वा तेभ्योऽथ पादप्रक्षालनादिकम् ॥
कृत्वा बंकापुरं गत्वा स्वकीयैस्ते सहागमन् ॥ ४८ ॥
तेषामाज्ञानुसारेण ते राजोपन्तमन्दिरे ॥
वासं कृत्वा देवतार्चां कृत्वा भोक्तुं मठं ययुः ॥ ४९ ॥
आलोक्य तत्र देवार्चां भुक्त्वा स्वाभिनिवेदितम् ॥
मन्त्राक्षतां गृहीत्वा ते निजस्थानं पुनर्ययुः ॥ ५० ॥
अनुसृत्यैव संप्राप्य श्रीपादानामनुग्रहम् ॥
तत्रैव पूजिता आसन्गृहस्थानां गृहे गृहे ॥ ५१ ॥
देशादेशस्थशिष्येभ्यो नीत्वा श्रीपादपत्रिकाम् ॥
ततस्तैरभ्यनुज्ञाता जग्मुर्देशान्तरं प्रति ॥ ५२ ॥

श्रीपादानुग्रहबलात्तेऽथ सर्वत्र पूजिताः ॥
भुक्त्वा सभातले नित्यमस्तुवन्गुरुशेखरान् ॥ ५३ ॥
एवं श्रीपादपादाब्जभजकानामनेकशः ॥
मनोरथा भविष्यन्ति मादृशानां किं पुनः ॥ ५४ ॥

**इति श्रीम........पूर्णबोधगुरुवंशकथाकल्पतरौ श्रीसत्यबोधमठं प्रति श्रीवरदेन्द्रागमकथावर्णनं नाम एकोत्तरत्रिंशः शाखासर्गः**



## अथ द्वात्रिंशः शाखासर्गः

वरदेन्द्रेषु श्रीपादानुज्ञया निर्गतेष्वथ ॥
खण्डेराजस्स्वामिसेवां नानारूपमथाकरोत् ॥ १ ॥
विष्णुतीर्थस्य परितश्शिलाशालामकारयत् ॥
यस्यां निविष्टाश्श्रीपादा जपं कुर्वन्ति सर्वदा ॥ २ ॥
उद्यानमुत्तरे भागे पूर्वभागे गृहाण्यपि ॥
ब्राम्हणानां निवासार्थं निर्मितानि पृथक्पृथक् ॥ ३ ॥
एवमध्यापकैर्मध्वशास्त्रव्याख्यानतत्परैः ॥
विद्वद्भिस्संयुतं चक्रे सोऽग्रहारं मनोहरम् ॥ ४ ॥
अग्रहारब्राम्हणानां पोषणार्थं पृथक्पृथक् ॥
सर्वेषां धनमर्यादामकरोत्स्वामिबोधितः ॥ ५ ॥
सवणूरं समारभ्य वरदायास्तटावधि ॥
वृक्षानारोपयामास मार्गपार्श्वद्वयेऽपि सः ॥ ६ ॥
तेषां संरक्षणार्थाय वाप्यस्तेनैव निर्मिताः ॥
मध्ये मध्ये तु वृक्षाणामतिस्वादुजलान्विताः ॥ ७ ॥
आरामा निर्मितास्तत्र चूतादितरुभिर्युताः ॥
ब्राम्हणानां विश्रमार्थं शाला वापीषु निर्मिताः ॥ ८ ॥
तस्यैव सेवकाः कुम्भैर्महिषोपरि संस्थितैः ॥
उदकं सेचयामासुर्वृक्षमूलेषु नित्यशः ॥ ९ ॥

ततस्साध्यामृतस्यान्तर्मठमध्ये शिलामयम् ॥
लक्ष्मीनृसिंहं गुरवस्स्थापयामासुरग्रतः ॥ १० ॥
तद्द्वारदेशे श्रीमन्तं हनूमन्तं तदग्रतः ॥
ईश्वरं स्थापयामासुर्नृसिंहोपासकं सदा ॥ ११ ॥
त्रिविक्रमस्यार्चकोऽथ नृसिंहस्यापि पूजकः ॥
श्रीपादाज्ञानुसारेण चैक एवाभवद्द्वयोः ॥ १२ ॥
प्रातस्संपूजयामास नरसिंहं निरन्तरम् ॥
श्रीपादा देवपूजान्ते स्वयं नित्यमपूजयन् ॥ १३ ॥
ततश्श्रीमद्विष्णुतीर्थात्पश्चिमेऽथ मनोहरे ॥
समीपदेशे तेनैव रम्यदेवालयः कृतः ॥ १४ ॥
ततश्श्रीमद्वेङ्कटेशश्श्री–धराभ्यां समन्वितः ॥
किरीट–कुण्डलाद्यग्र्यसहजाभरणैर्युतः ॥ १५ ॥
सर्वावयवसौन्दर्यसर्वलोकमनोहरः ॥
विष्णुतीर्थाभिमुख्येन सत्यबोधैः प्रतिष्ठितः ॥ १६ ॥
स्वामिनस्तस्य पूजार्थं पूजकं च प्रचक्रिरे ॥
पुराणवाचकं चक्रुर्नित्यं तत्र सुरालये ॥ १७ ॥
भूषणानि विचित्राणि वस्त्राणि विविधान्यपि ॥
छत्र–चामर–वादित्र–नानावाहनपूर्वकान् ॥ १८ ॥
दीपस्तम्भाद्यनेकोपकरणानि जगत्पतेः ॥
तस्य देवाधिदेवस्य खण्डेराजस्स्वयं ददौ ॥ १९ ॥
देवनैवेद्यशेषान्तं ब्राम्हणेभ्यो निरन्तरम् ॥
भोजयामास विधिवत्खण्डेराजोऽतिभक्तितः ॥ २० ॥
तत आग्नेयदिग्भागे श्रीपादानामनुज्ञया ॥
खण्डेराजस्समकरोत्क्रयार्थं पण्यवीथिकाम् ॥ २१ ॥
तस्याः प्राच्यामग्रभागे कृत्वा देवालयं शुभम् ॥
सीतारामस्स्वामिवर्यैस्स्थापितो याम्यदिङ्मुखः ॥ २२ ॥
यो निर्मितस्स्वामिवर्यैर्वेङ्कटेशार्चको द्विजः ॥
स एव सीतारामस्याप्यर्चकोऽभून्निरन्तरम् ॥ २३ ॥

तत्राप्यलङ्कारदेवपूजोपकरणादयः ॥
नैवेद्य-वाद्योत्सवाद्या निर्मिता गुरुशेखरैः ॥ २४ ॥
तत्पृष्ठभागे तु शिलां भित्वा स्वादुजलान्वितम् ॥
सीतारामाभिधं तीर्थं निर्मितं गुरुशेखरैः ॥ २५ ॥
सीतारामाग्रतः पान्थभोजनार्थं गुरूत्तमैः ॥
छत्रं निर्मापयासुस्स्वामिनः पुण्यशालिनः ॥ २६ ॥
तन्मध्ये देवनिलयं कृत्वा गोपालसंज्ञकम् ॥
कृष्णं संस्थापयित्वा तदर्चकं च प्रचक्रिरे ॥ २७ ॥
तस्याप्यलङ्कार-वस्त्रपूजोपकरणादयः ॥
नैवेद्य-वाद्योत्सवाद्या निर्मिता गुरुशेखरैः ॥ २८ ॥
तद्देशस्थाखिलैर्ग्रामैर्वृत्तिं कृत्वाऽतिकोविदाः ॥
धान्यपूर्वं मरीच्यन्तं छत्रसाधनमाचरन् ॥ २९ ॥
तत्रापि श्रीस्वामिवर्यैरग्रहारश्च निर्मितः ॥
ब्राम्हणानां निवासार्थं तेषां वृत्तिश्च निर्मिता ॥ ३० ॥
विष्णुतीर्थं समारभ्य छत्रान्तं प्रभुशेखरैः ॥
देव-ब्राम्हणरक्षार्थं स्थापितास्तत्र पत्तयः ॥ ३१ ॥
किं वर्णयामि तत्पुण्यं महासंस्थासंयुताः ॥
श्रीपादाः पूजिता येन बहुकालं निरन्तरम् ॥ ३२ ॥
असाध्यस्वामिकार्याणि कृतानि स्वाम्यनुग्रहात् ॥
कीर्तिस्संपादिता येन खण्डेराजेन भूतले ॥ ३३ ॥
श्रीपादानां दर्शनार्थमागतेभ्योऽतिदूरतः ॥
ब्राह्मणेभ्यो धनं दत्तं याचकेभ्यो निरन्तरम् ॥ ३४ ॥
तेन नास्तीति नैवोक्तं कदाचिदपि सर्वथा ॥
अतोषयत्प्राणिमात्रं दत्वाऽल्पं वा धनं (त्वरा)द्रुतम् ॥ ३५ ॥
खण्डेराजस्त्वेवमाद्यं कृत्वा श्रीपादपूजनम् ॥
लोकेऽतुलां कीर्तिमाप पुण्यरत्नाकरोऽभवत् ॥ ३६ ॥
निरन्तरं तेन यद्यत्कृतं श्रीपादपूजनम् ॥
नानाविधं भक्तिपूर्वं मनो-वाक्कायकर्मभिः ॥ ३७ ॥

तेष्वेकमपि कार्त्स्न्येन नान्यैस्साध्यं कथञ्चन ॥
तेन तस्यानिष्टराशिश्शान्ताऽभूद्गुर्वनुग्रहात् ॥ ३८ ॥
ऐश्वर्यस्याभिवृध्दिश्चाभवत्तेन द्विजेष्वथ ॥
स्थिरा कृपाबुध्दिरपि सत्यबोधप्रसादतः ॥ ३९ ॥
यथा चक्रे गुरोस्सेवां भक्त्या नित्यमतन्द्रितः ॥
तथैव प्रभुसेवां च चक्रे शक्तिमतीत्य च ॥ ४० ॥
ततश्शूरवरे सिन्धोस्तीरे लोकान्तरं गते ॥
तदात्मजे राजपदं प्राप्तेऽत्यन्तपराक्रमे ॥ ४१ ॥
तद्दर्शनार्थं प्रभुणा तथा श्रीपादशेखरैः ॥
अनुज्ञप्तोऽथ प्रययौ शीघ्रेणाब्धितटं प्रति ॥ ४२ ॥
गत्वा तत्रैव कतिचित्कालं तमनुसृत्य च ॥
प्रसाद्य कार्यशेषार्थं तत्रैवावस्थितोऽभवत् ॥ ४३ ॥
सवणाख्यपुरे श्रीमत्सत्यबोधगुरूत्तमाः ॥
श्रीशोभकृद्वत्सरान्ते रोगग्रस्ता बभूविरे ॥ ४४ ॥
तथाऽपि नित्यं श्रीपादा देवपूजां विधाय च ॥
कष्टेन पथ्यस्वीकारं चक्रिरे व्याधिपीडिताः ॥ ४५ ॥
एवं ते मासपर्यन्तमत्यन्तश्रमसंयुताः ॥
दिने दिने क्षीणबलाः पराधीना बभूविरे ॥ ४६ ॥
यदाऽत्यन्तं परवशास्तदानीं गुरुशेखराः ॥
संस्थानयोग्यानितरानदृष्ट्वा मठसंस्थितान् ॥ ४७ ॥
रामचन्द्राभिधाचार्यान्कोविदानात्मशिक्षितान् ॥
समाहूय ददुः प्रीत्या सन्न्यासं विधिपूर्वकम् ॥ ४८ ॥
प्रणवं चोपदिश्याथ तेभ्यो नाम ददुर्मुदा ॥
सत्यसन्धा इति तदा सत्यबोधमुनीश्वराः ॥ ४९ ॥
अभिषिच्य सभामध्ये दत्वा संस्थानमादरात् ॥
तैस्सार्धं देवपूजां ते चक्रुर्दशदिनावधि ॥ ५० ॥
शोभकृद्वत्सरे फाल्गुनासिते प्रतिपत्तिथौ ॥
यतीनां स्नानकाले तु स्नात्वा श्रीपादशेखराः ॥ ५१ ॥

धृतोर्ध्वपुण्ड्रास्तुलसीमालालङ्कृतकन्धराः ॥
हरिनामान्युच्चरन्तो बाह्यव्यापारवर्जिताः ॥ ५२ ॥
प्रणवादिकमन्त्रौघजपकाले गुरूत्तमाः ॥
त्यक्त्वा देहं हरिपदं जग्मुरत्यन्तदुर्लभम् ॥ ५३ ॥
श्रीमन्मठे महापुण्ये विष्णु–वैष्णवसन्निधौ ॥
एषां वृन्दावनमभूत्सवणाख्ये पुरोत्तमे ॥ ५४ ॥
ततश्श्रीमत्सत्यसन्धा देवपूजां विधाय ते ॥
चक्रुस्त्रिदिनपर्यन्तं समाराधनमद्भुतम् ॥ ५५ ॥
खण्डेराजोऽपि तत्पूर्वं सैन्ये त्वेकादशींदिने ॥
कृत्वा जागरणं पश्चाद्यामशेषे ततः परम् ॥ ५६ ॥
स्नानकाले तु श्रीपादपादन्यस्तमनास्तदा ॥
मूर्च्छाव्याजेन तत्सेवां कर्तुमग्रे परं ययौ ॥ ५७ ॥
एवमादिकथायुक्तं काव्यमेतत्प्रकीर्तितम् ॥
पद्यानि द्विसहस्राणि द्विषष्ठ्यूनानि सर्वशः ॥ ५८ ॥
तथैव निर्मितास्सर्गास्त्रयस्त्रिंशन्मितास्तथा ॥
नानाविधकथायुक्ताश्शृण्वतामादरप्रदाः ॥ ५९ ॥
एतेष्वादौ पूर्णबोधतीर्थानां कीर्तनं कृतम् ॥
पद्मनाभादिश्रीसत्यबोधान्तानां महात्मनाम् ॥ ६० ॥
याः कथाः कथिताः पूर्वं विस्तरेण मयाऽखिलाः ॥
नानावृत्तयुतैश्श्लोकैः कविप्रीतिविवर्धकैः ॥ ६१ ॥
तांस्त्विदानीं पुनरपि सुसंकुच्यानुपूर्वकम् ॥
अनुक्रमणिकारीत्या ग्रन्थान्ते कीर्तयाम्यहम् ॥ ६२ ॥

**इति श्रीमद्वेणु. . . .पूर्णबोधगुरुवंशकथाकल्पतरौ श्रीसत्यबोधतीर्थश्रीपादैः कृतश्रीनृसिंह--वेङ्कटेश--सीताराम--स्थापनाग्रहारनिर्माणकथा--श्रीपादनिर्याणकथानिरूपणं नाम**

**द्वात्रिंशः शाखासर्गः**



## अथ त्रयस्त्रिंशः शाखासर्गः

हंसरूपाद्भगवतो यस्सन्यासक्रमः क्रमात् ।।
आपूर्णबोधमायातो नवभिः प्रथितः क्षितौ ।। १ ।।
यः पूर्णबोधतीर्थस्स साक्षाद्वायुर्न संशयः ।।
स सम्यक्कीर्तितस्सर्गे प्रथमे प्राणनायकः ।। २ ।।
ततो मध्वस्य गमनं कीर्तितं बदरीं प्रति ।।
चक्रे स सूत्रभाष्यं तत्सर्वं तत्र प्रकीर्तितम् ।। ३ ।।
पुनरागमनं तस्माद्रौप्यपीठपुरं प्रति ।।
श्रीकृष्णागमनं चापि प्रोक्तं तत्पूजनादिकम् ।। ४ ।।
पुनर्बदरिकायात्रा प्रोक्ता व्यासकराम्बुजात् ।।
व्यासाष्टकाप्तिस्तदनु पुनरागमनक्रमः ।। ५ ।।
सुब्रम्हण्ये मध्यवाटेऽष्टकाद्व्यासत्रिकस्य च ।।
स्थापनं कीर्तितं सर्गे द्वितीये चानुपूर्वकम् ।। ६ ।।
ततो दिग्विजयाख्यस्य स्थापनं राघवस्य च ।।
एकोनत्रिंशत्संख्याकपदार्थैस्सह चान्वहम् ।। ७ ।।
देवपूजाक्रमः प्रोक्तो ग्रन्थानां रचनाक्रमः ।।
सन्न्यासदानं श्रीपद्मनाभ–नृहरितीर्थयोः ।। ८ ।।
ततो नृहरितीर्थाग्रे पूर्णबोधगुरूत्तमैः ।।
मूलरामस्थितिः प्रोक्ता गजराजधनालये ।। ९ ।।
राम–सीतालक्षणानि प्रोक्तानि निखिलान्यपि ।।
सर्गे तृतीये तत्सर्वमेव प्रोक्तं विविच्य तु ।। १० ।।
ततस्सन्न्यासदानं च माधवाक्षोभ्यतीर्थयोः ।।
पूर्णबोधमुखाट्टीकाकारोत्पत्तिकथाश्रुतिः ।। ११ ।।
गमनं तीर्थयात्रार्थं नृहर्याख्यमुनेस्तथा ।।
जगन्नाथे निवासश्चाऽराजकत्वनिमित्ततः ।। १२ ।।
राज्यप्राप्तिर्द्वादशाब्दोत्तरं राजसुताय तैः ।।
राज्यार्पणं द्रव्यगृहाद्ग्रहणं सीरजापतेः ।। १३ ।।

कूर्मक्षेत्रे राम–सीता–लक्ष्मणस्थापनं ततः ॥
पुनरागमनं तेषां रौप्यपीठपुरं प्रति ॥ १४ ॥
रामार्पणं मध्वनाम्ने पद्मनाभाभिषेचनम् ॥
तस्मै संस्थानदानं च रौप्यपीठपुरात्ततः ॥ १५ ॥
पूर्णबोधस्य गमनं महाबदरिकां प्रति ॥
एवमाद्यखिलं सम्यक् प्रोक्तं सर्गे चतुर्थके ॥ १६ ॥
ततो नृहर्याख्यतीर्थ--माधवाभिधतीर्थयोः ॥
माहात्म्यं कीर्तितं वंशराघवागमनं तथा ॥ १७ ॥
अक्षोभ्यतीर्थमाहात्म्यं विठ्ठलागमनं तथा ॥
प्रोक्तमित्यादिकं सर्गे पञ्चमे पुण्यवर्धनम् ॥ १८ ॥
शङ्खोदकस्य माहात्म्यं जयतीर्थाभिषेचनम् ॥
शेषेण जिव्हामालिन्यहरणं जयराड्गुरोः ॥ १९ ॥
जयतीर्थमुनिश्रेष्ठैष्टीकाकरणकीर्तनम् ॥
इत्यादिका कथा षष्ठे सर्गे तु परिकीर्तिता ॥ २० ॥
ततो विद्याधिराजेभ्यस्तैस्संस्थानार्पणादिकम् ॥
तथा भागीरथीयात्रां कर्तुं भीमरथीं प्रति ॥ २१ ॥
विद्याधिराजगमनं जपकाले गुरून्प्रति ॥
गङ्गा प्रत्यक्षमभ्येत्य माऽऽयाहीति निवारणम् ॥ २२ ॥
ततः कवीन्द्रतीर्थानां माहात्म्यं परिकीर्तितम् ॥
वागीश–रामचन्द्राभ्यां यत्कृतं तच्च कीर्तितम् ॥ २३ ॥
ततस्तु मठभेदस्य कारणं परिकीर्तितम् ॥
रामप्रसन्नीकरणं भूविदारणमञ्जसा ॥ २४ ॥
विद्यानिधिमुनीनां तु संस्थानागमनादिकम् ॥
कथितं सप्तमे सर्गे तत्पुण्यनिकरागतम् ॥ २५ ॥
ततो विद्यानिधिगुरु–विबुधेन्द्रमुनीन्द्रयोः ॥
विरोधकथनं तस्य शान्तिस्तु कथनं तथा ॥ २६ ॥
ततस्संस्थानदानं च रघुनाथगुरोस्तदा ॥
कथितं चाष्टमे सर्गे गुरुराजकृपाबलात् ॥ २७ ॥

रघुनाथमुनीन्द्राणां ततस्तु महिमान्विताः ॥
कथाश्च विविधाः प्रोक्ता विख्याता भूमिमण्डले ॥ २८ ॥
मृतेन सह गच्छन्त्या अष्टपुत्रा भवेति तैः ॥
उक्तवाक्यं सत्यमभूत्तच्चापि परिकीर्तितम् ॥ २९ ॥
रघुनाथाख्यश्रीपाद–विबुधेन्द्र–मुनीन्द्रयोः ॥
दर्शनं कथितं सम्यक् प्रीत्या संवादपूर्वकम् ॥ ३० ॥
सेतुस्नानं समुद्दिश्य गमनावसनेऽम्बुधेः ॥
दर्शनं विप्ररूपस्य कथनं लोकसन्निधौ ॥ ३१ ॥
दर्शनं व्यासराजस्य रघुनाथमुनेस्ततः ॥
कीर्तितं नवमे सर्गे कामिताभीष्टदं नृणाम् ॥ ३२ ॥
ततस्तु रघुवर्येभ्यस्संस्थानं गुरुशेखरैः ॥
रघुनाथाह्वयैर्दत्तं सा कथा च प्रकीर्तिता ॥ ३३ ॥
व्यासकूर्मागमकथा कीर्तिता लोकविश्रुता ॥
विचित्रे दशमे सर्गे विस्तरेणातिपुण्यदा ॥ ३४ ॥
ततस्तु रघुवर्येभ्यो मार्गदानं प्रकीर्तितम् ॥
महाप्रभावसंयुक्तं भीमरथ्या यदृच्छया ॥ ३५ ॥
रघूत्तमाख्यमुनये संस्थानं तु ततः परम् ॥
दत्तं तत्सर्वमप्युक्तं सर्गे त्वेकादशे मुदा ॥ ३६ ॥
रघूत्तमाख्यश्रीपादाश्रुतप्रवचनादिकम् ॥
लोकोन्मत्तत्वमीक्ष्याथ तैः कृताडम्बरादिकम् ॥ ३७ ॥
वेदव्यासमुनीन्द्रेभ्यस्तैस्संस्थानार्पणादिकम् ॥
कीर्तितं द्वादशे सर्गे सर्वेषां सुखसिद्धये ॥ ३८ ॥
वेदव्यासाख्यतीर्थानां चरितं परमाद्भुतम् ॥
कीर्तितं तैः कृतं पूर्वं पिनगुंड्यां सभातले ॥ ३९ ॥
व्यासराजमठं हित्वा व्यासतीर्थमठं प्रति ॥
कृष्णद्वैपायनमुनेरागमश्च प्रकीर्तितः ॥ ४० ॥
विद्याधीशाख्यतीर्थानां संस्थानप्राप्तिकारणम् ॥
प्रोक्तं त्रयोदशे सर्गे तन्माहात्म्यं महाद्भुतम् ॥ ४१ ॥

गयाख्यक्षेत्रगमनं तदा फल्गुनदीतटे ॥
शङ्खोदपतनाच्छुष्कबदरीवर्धनं पुनः ॥ ४२ ॥
ततो बदरिकायात्राक्रमस्तस्माद्विनिर्गमः ॥
एकचक्राख्यनगरागमस्तेषां प्रकीर्तितः ॥ ४३ ॥
ततो दिग्विजयाख्यश्रीरामं धर्मपुरीं प्रति ॥
संप्रेषयित्वैंकचक्रानगरे सुमनोहरे ॥ ४४ ॥
वैकुण्ठयात्रागमनं विद्याधीशमहागुरोः ॥
एवं चतुर्दशे सर्गे कीर्तितं चानुपूर्वकम् ॥ ४५ ॥
ततो वेदनिधिस्वामिमाहात्म्यं परिकीर्तितम् ॥
कर्णाटकादिगमनं राघवेन्द्रमुनीश्वरैः ॥ ४६ ॥
स्नेहः कम्भालूररामचन्द्रतीर्थैर्विरोधिभिः ॥
वैरं पञ्चदशे सर्गेऽखिलमेव प्रकीर्तितम् ॥ ४७ ॥
कृष्णद्वैपायनमुनेर्विठ्ठलानयनं तथा ॥
एवं नानाविधाः प्रोक्ताः कथास्सर्गे तु षोडशे ॥ ४८ ॥
ततस्सत्यव्रतानां च कथा सम्यगुदीरिता ॥
सत्यनिध्याख्यश्रीपादमाहात्म्यं कीर्तितं ततः ॥ ४९ ॥
श्रीसत्यनाथतीर्थानां माहात्म्यं च ततः परम् ॥
प्रोक्तं सप्तदशे सर्गेऽष्टादशेऽपि सुविस्तरम् ॥ ५० ॥
ततोऽभिनवतीर्थानां चरितं परमाद्भुतम् ॥
नानाविधकथायुक्तं कीर्तितं लोकविश्रुतम् ॥ ५१ ॥
म्लेच्छराज-महाचोर-महाग्निभयपूर्वकम् ॥
एकोनविंशमारभ्याद्वाविंशत्सर्गमीरितम् ॥ ५२ ॥
ततस्तु सत्यपूर्णानां कथा प्रोक्ता मनोहरा ॥
श्रीसत्यविजयानां च सत्यप्रियमुनेरपि ॥ ५३ ॥
अत्यद्भुतं तन्माहात्म्यं नानाविधकथायुतम् ॥
चतुर्विंशतिसंख्याके सर्गे प्रोक्तं मनोहरम् ॥ ५४ ॥
नवसर्गैस्ततश्श्रीमस्सत्यबोधमहामुनेः ॥
चरितं परमाश्चर्यममानुषमितीरितम् ॥ ५५ ॥

इत्थं श्रीमत्सत्यबोधगुरुराजकृपाबलात् ॥
पूर्णप्रज्ञमुखाशेषगुरुसंकीर्तनं कृतम् ॥ ५६ ॥
मदीयपुण्यनिचयाज्जन्म-जन्मान्तरार्जितात् ॥
मयेदं रचितं काव्यं सद्वैष्णवसुखप्रदम् ॥ ५७ ॥
सन्तः कियन्तो लोकेऽस्मिन्पुरा किमु न संस्थिताः ॥
मदीयभागधेयं ते चक्रुः काव्यं कृपालवः ॥ ५८ ॥
नेयं शक्तिर्मदीया किंत्वस्मादार्यकृपोद्भवा ॥
महतां वंशजातेषु प्रायस्तेषां कृपा भवेत् ॥ ५९ ॥
भीमा-कृष्णामध्यधात्र्या भूषाभूता तु या पुरी ॥
विजयाख्याऽभवत्तस्यां वृत्तिमान्भीमतान्त्रिकः ॥ ६० ॥
भारद्वाजकुलोत्पन्नो यादवाख्यतनूद्भवः ॥
द्वादशाब्दमुषित्वाऽऽदौ स तु काश्यामधीतवान् ॥ ६१ ॥
काव्यालङ्कार-मीमांसा-शब्द-तर्कसुपारगः ॥
मधुतीर्थमहातीर्थतीर्थीकृतकुलाग्रणीः ॥ ६२ ॥
त्रिविक्रमोऽभवत्तस्माद्दीपाद्दीप इवापरः ॥
तस्यात्मजाद्वासुदेवादभवद्भीमनामकः ॥ ६३ ॥
यदुपत्यार्यवित्पौत्रवेङ्कटार्यपदार्चकैः ॥
कृष्णाचार्यैश्शिक्षितस्स चक्रे काव्यं सुदुर्लभम् ॥ ६४ ॥
ग्रन्थाः पूर्वंकृताः प्रौढैःकविभिर्भूमिमण्डले ॥
कठोरनारिकेलादिपाकैष्टीकासमन्वितैः ॥ ६५ ॥
पण्डितैरप्यसाध्यास्ते ज्ञातुं टीकां विनाऽखिलैः ॥
सुखसाव्याः कथं ते स्युस्तेषामर्थोऽतिदुर्लभः ॥ ६६ ॥
तस्मात्सर्वहितार्थाय द्राक्षापाकैर्मनोहरैः ॥
श्लोकैः कविमुदे काव्यं कृतमेतन्मयाऽधुना ॥ ६७ ॥
वाङ्माधुर्यं चान्वयानां सामीप्यं वीक्ष्य सज्जनाः ॥
काव्येऽस्मिन्मयि तुष्यन्तु कवयो मत्सरोज्झिताः ॥ ६८ ॥
दृष्ट्वैतत्कवयः काव्यं कृपां मयि कृपास्पदे ॥
कृत्वा क्वचित्तु व्यत्यस्तं शोधयन्तु विमत्सराः ॥ ६९ ॥

मयेदमादौ रचितं काव्यं नवकथायुतम् ॥
दृष्ट्वा कुर्वन्तु कवयः काव्यानां रचनां स्वयम् ॥ ७० ॥
सत्यबोधगुरोराज्ञामवलम्ब्य मयाऽधुना ॥
कृतं काव्यमिदं तेषां प्रीत्यै तुष्टा भवन्तु ते ॥ ७१ ॥
तदीयहृदयाम्भोजवासिनौ मध्व–राघवौ ॥
भवत. परमप्रीतौ स्वत एव न संशयः ॥ ७२ ॥
द्विज. पठेद्वेदविदां वरिष्ठः क्षोणीपतित्वं नृपवंशजातः ॥
वैश्यो धनी पादभवो महत्त्वं पुमर्थयुगं निखिला लभेरन् ॥ ७३ ॥

**इति श्रीमद्वेगुपल्लीश्रीनिवासाचार्यात्मजवेङ्कटाचार्यपादपद्मा–राधकबाहुपल्लीकृष्णाचार्यान्तेवासिदैवज्ञभीमविरचिते पूर्णबोधगुरु–वंशकथाकल्पतरौ श्रीपूर्णबोधादिश्रीसत्यबोधतीर्थश्रीपादान्तगुरु–संक्षिप्तकथावर्णनं नाम त्रयोविंशः शाखासर्गः समाप्तः ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**

**ग्रन्थोऽयं समाप्तः**

---